कर्नाटक-प्रशासनम्

स्नातकपूर्व-शिक्षणमण्डलम्

# साहित्यचन्द्रिका

( संस्कृत-पठ्यपुस्तकम् )

[ स्नातकपूर्व - प्रथमवर्षविद्यार्थिनाम् कृते १९८१ - ८२ वर्षस्य नियोजितम् ]

# SAHITYA-CHANDRIKA

१९८१

## सम्पादकसमितिः

१. डाक्टर् एम् शिवकुमारस्वामी — अध्यक्षः

२. श्री एम् रघुराम शर्मा — सदस्यः

३. श्री एस् सीतारामभट्टः — सदस्यः

स्नातकपूर्वशिक्षणमण्डलमिदं स्नातकपूर्व–प्रथमवर्षस्य विद्यार्थिनां कृते नियोजितपठ्यपुस्तकनिर्माणकार्ये सर्वरीत्यापि साहाय्यं कृतवतां तत्पुस्तकसम्पादकसमितेः अध्यक्षाणां सदस्यानां च कृतज्ञतां सानन्दं समर्पयति ।

निर्देशकः

# विषयानुक्रमणिका

## गद्यविभागः



## पद्यविभागः



## व्याकरणादिविभागः

## शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 4 | 17 | यद्ध्र्वं | यदूर्ध्वं |
| 14 | 11 | तिर्मितो | निर्मितो |
| 18 | 3 | ङ्क्लिं | पङ्क्तिं |
| 21 | 12 | बन्धाति | बध्नाति |
| 33 | 3 | भंसाव्यते | संभाव्यते |
| 42 | 1 | शो | शत् |
| 46 | 4 | विवन्नः | विवन्नुः |
| 47 | 6 | वरणमालिकः | वरणमालिकां |
| 47 | 9 | माधुर्यादयां | माधुर्यादयः |
| 54 | 23 | भ्रुबीः | भ्रुवोः |
| 60 | 11 | बहुजनर्नितरां | बहुजनैर्नितरां |
| 86 | 5 | वेधोभ्याय् | वेधोभ्याम् |
| 87 | 4 | भाभ्याभ् | भाभ्याम् |
| 107 | 27 | अनर्धं | अनर्घं |

ऋकारान्त-शब्दानां द्वितीया-बहुवचनं षष्ठी-बहुवचनं च दीर्घऋकारयुक्तं भवति ।

# गद्य–विभागः

## १. महासंहिता

[ अस्मिन् विश्वे सर्वं परस्परम् अनुस्यूतं वर्तते । बाह्यं चक्षुः केवलं वैविध्यमेव पश्यति । आन्तरिकं ज्ञानरूपं चक्षुः सर्वेषां वस्तूनां अनुस्यूतत्वं परस्परं सम्बन्धं वा निध्यायति । अनेन ध्यानेन पुरुषः ऐहिकं आमुष्मिकं च फलं लभते । तैत्तिरीयोपनिषदः उद्धृतायां अस्यां महासंहितायां लोकादिषु पञ्च अधिकरणेषु सम्बन्धः निरूपितः । ]

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।। ॐ शान्तिः शान्तिः शान्तिः ।

।। इति प्रथमोऽनुवाकः ।।

ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ।

।। इति द्वितीयोऽनुवाकः ।।

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः संहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनं सन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा

सन्धिः। प्रजननम् सन्धानम्। इत्यधिप्रजम्। अथाध्यात्मम्। अधराहनु. पूर्वरूपम्। उत्तराहनुरुत्तररूपम्। वाक् सन्धिः। जिह्वा सन्धानम्। इत्यध्यात्मम्। इतीमा महासंहिताः। य एवमेता महासंहिता व्याख्याता वेद। सन्धीयते प्रजया पशुभि। ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन।

॥ इति तृतीयोऽनुवाकः ॥

## टिप्पणी

वेदे चत्वारः भागाः वर्तन्ते। ते च संहिता ब्राह्मणम् आरण्यकम् उपनिषत् इति। तत्र उपनिषत् वेदस्य अन्तिमः भागः सारभूतः। तस्मात् अयं भागः वेदान्त इति प्रसिद्धः। उपनिषत् शब्दः उप+नि उपसर्ग–पूर्वकात् सद्–धातोः निष्पन्नः। गुरोः समीपे (उप) निषण्णेन शिष्येण सम्पद्यमानं ज्ञानमिति उपनिषत्–शब्दस्य अर्थः। तदेव रहस्यविद्या अध्यात्म-विद्या चेति कथ्यते। तदर्थ–प्रतिपादकग्रन्थोऽपि उपनिषत् इत्युच्यते। उपनिषदः बहवः सन्ति। तासु ईश, केन, कठ, छान्दोग्यैतरेय, तैत्तिरीय, प्रश्न, बृहदारण्यक, माण्डूक्य, मुण्डकाः दश उपनिषदः प्राचीनतमा इति परिगणिताः। एता उपनिषदः बुद्धकालात् पूर्वमेव सङ्कलिता अभवन्।

उपनिषत्सु अनेका विचारधाराः सन्ति। ता एव सकल–भारतीयदर्शनानां बीजम्। वेदान्तदर्शनस्य तु ता एव मूलप्रस्थानम्। भगवद्गीता ब्रह्मसूत्रं चेति प्रस्थानद्वयमपि उपनिषन्मूलकम्। शङ्करादयः आचार्याः तासां भाष्य–रचनपूर्वकं स्वसिद्धान्तान् स्थापयामासुः। ब्रह्मणः जीवात्मनः जगतश्च स्वरूपं, तेषां परस्परं सम्बन्धः, ब्रह्मसाक्षात्कारस्य साधनं च उपनिषदां प्रधान–विषयः।

तैत्तिरीयोपनिषत् कृष्णयजुर्वेदस्य तैत्तिरीयशाखायां अन्तर्गता। इयं केवलं गद्यमयी। उपषिद्गद्यस्य परिचायनार्थं अयं पाठः प्रवृत्तः। उपनिषदां गद्यं सरलं मनोहरं च। तस्य शैली तु निराडम्बरा हृदयस्पर्शिनी च। अर्थस्तु अतीव गम्भीरः। स एव मुमुक्षुभिरवश्यं विज्ञेयः। तैत्तिरीयोपनिषदः उद्धृतेऽस्मिन् गद्यभागे भाषासौन्दर्यं अर्थगाम्भीर्यं च स्पष्टं भविष्यति।

तैत्तिरीयोपनिषदि शिक्षावल्ली, ब्रह्मानन्दवल्ली, भृगुवल्ली चेति त्रयः भागाः वर्तन्ते। एकैकस्यां वल्यां अनेके अनुवाकाः सन्ति। तथाहि शिक्षावल्यां द्वादश अनुवाकाः, ब्रह्मानन्द-वल्यां नव, भृगुवल्यां दश अनुवाकाः वर्तन्ते। अत्र शिक्षावल्याः शान्तिपाठः (प्रथमोऽनुवाकः) शिक्षाव्याख्या (द्वितीयोऽनुवाकः) महासंहिता ध्यानं च (तृतियोऽनुवाकः) उद्धृताः।

शान्तिपाठे तावत् ब्रह्मविद्याजिज्ञासूनां विघ्नपरिहारार्थं मित्रावरुणौ संप्रार्थ्येते । तदनन्तरं वर्णस्वरादि–शिक्षा दत्ता । महासंहिता–भागे आदौ ऐहिकफलं यशः आमुष्मिक–फलं ब्रह्मवर्चश्च आशस्य, ततः लोकः, ज्योतिः, विद्या, प्रजा, आत्मा इति पञ्च–अधिकरणेषु संहिता निरूपिता । तत्र लोके पृथिवीमारभ्य द्युलोकपर्यन्तम् एकमेव वस्तु । तयोश्च सम्बन्धः आकाशरूपः । सम्बन्धजनकश्च वायुः । एवं पृथिवीद्युलोकाकाशवायूनां एकसूत्रनिबद्धत्वं ध्यायेत् । ज्योतिर्विषये च दृश्यमानानि ज्योतींषि एक एव पदार्थः । तद्यथा— एकस्यैव ज्योतिषः रूपद्वयम् । तत्र अग्निरेकं रूपम् । सूर्यः रूपान्तरम् । अग्निसूर्ययोः जलं सम्बन्धः । सम्बन्धजननी तु विद्युत् । एवं, विद्यायाः प्रजायाः आत्मनश्च विषयोऽपि एकत्वेन ध्येयः ।

**शम्** — सुखम् । **नः** — अस्माकम् । मित्रः, वरुणः, इन्द्रो, बृहस्पतिः, विष्णुः, इत्यादयो देवताः । **उरुक्रमः** — इदं विष्णोः विशेषणम् । सर्वव्यापीत्यर्थः । **प्रत्यक्षम्**— सर्वकर्माध्यक्षम् । **ब्रह्म** — सूत्ररूपम् । **ऋतम्** — यथार्थज्ञानवन्तम् । **सत्यम्** — यथार्थवक्तारम् । **अवतु** — रक्षतु । अव् धातोः लोट् प्र. पु. ए. । 'शान्तिः' इति पदस्य त्रिरावृत्या आध्यात्मिकः, आधिभौतिकः, आधिदैविकः इति तापत्रयस्य शान्तिः प्रार्थिता भवति ।

**शीक्षाम्** — शीक्षा – वेदाङ्ग – भूतेषु षट्शास्त्रेषु अन्यतमं शास्त्रम् । **वर्णः** — कण्ठताल्वादिस्थानानि । **स्वरः** — उदात्तादिः । **मात्रा** — कश्चन स्वरधर्मः । **बलम्**— विवृतादि–प्रयत्नाः । **साम** — सन्धिः । **सन्तानः** — पदसमुदायः । (एते विषयाः शीक्षाशास्त्रे निरूप्यन्ते ।) **सः** — मित्रादिदेवता–समुदायः । **'ह'** — अयं प्रसिद्धिद्योतकः । **नौ** — आवयोः गुरुशिष्ययोः । **अधिलोकम्** — लोकमधिकृत्य । पूर्वरूपं, उत्तररूपं, सन्धिः, सन्धानम्, इति चत्वारि संहिताया अङ्गानि । मुमुक्षुः एतानि अङ्गानि ध्यायेत् । **वैद्युतः** — विद्युत्समुदायः । **अन्तेवासी** — शिष्यः । **हनुः** — कपोल–समीप–प्रदेशः । **वेद** — अजानत् । **सन्धीयते** — सम्बध्यते । **सुवर्ग्येण** — उत्तमेन ।

———

# २. गार्गी-याज्ञवल्क्ययोः संवादः

[ अयं पाठः बृहदारण्यकोपनिषदः सङ्गृहीतः। विदेहाधिपतेः जनकस्य सभायां ब्रह्मज्ञानिनः समवेताः आसन्। तेषु याज्ञवल्क्यः प्रख्यातः आसीत्। विद्वत्समुदायं दृष्ट्वा जनकस्य मनसि जिज्ञासा सञ्जाता। 'एतेषु कः श्रेष्ठः ब्रह्मज्ञानी' इति। श्रेष्ठाय ब्रह्मज्ञानिने गवां सहस्रं दातुं जनकः ऐच्छत्। सः अवदत्—'य युष्मासु ब्रह्मिष्ठः सः एताः गाः स्वीकरोतु' इति। याज्ञवल्क्यः स्वशिष्यं प्रेरयामास—'एताः गाः नय' इति। तस्य ब्रह्मज्ञानं परीक्षितुम् अन्यैः ब्रह्मज्ञानिभिः विविधाः प्रश्नाः पृष्टाः। तस्मिन् अवसरे गार्गी अपि याज्ञवल्क्येन सह चर्चां चकार। अयमेव अस्य संवादस्य प्रसङ्गः। ]

अथ ह वाचक्नवी उवाच—"ब्राह्मणा भगवन्तो हन्ताहम् इमं द्वौ प्रश्नौ प्रक्ष्यामि। तौ चेन्मे वक्ष्यति, न जातु युष्माकम् इमं कश्चिद्ब्रह्मोद्यं जेता" इति। "पृच्छ गार्गि" इति।

सा होवाच—"अहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेत् एवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यां उपोदस्थाम्। तौ मे ब्रूहि" इति। "पृच्छ गार्गि" इति।

सा होवाच—"यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावा-पृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं च" इति।

स होवाच—"यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च" इति। "कस्मिन्नु खलु आकाश ओतश्च प्रोतश्च" इति।

स होवाच—"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदंति, अस्थूलम् अनणु अह्रस्वम् अदीर्घम् अलोहितम् अस्नेहम् अच्छायम् अतमोऽवायु अनाकाशम् असङ्गम् अरसम् अगन्धम् अचक्षुष्कम् अश्रोत्रम् अवाक् अमनोऽतेजस्कम् अप्राणम् अमुखम् अमात्रम् अनन्तरम् अबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन।

" एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राणि अर्धमासा मासा ऋतवः संवत्सरा विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशम् अनु एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः।

" एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च" इति।

## टिप्पणी

अयं भागः वृहदारण्यकोपनिषदः तृतीयाध्यायात् उद्धृतः। वृहदारण्यकोपनिषत् प्राचीनतमेषु दशोपनिषत्सु एकतमा। "उपनिषत्" इत्ययं शब्दः "उप"–उपसपूर्गवकात् 'सद्' धातोः निष्पन्नः। गुरोः समीपे आसीनः शिष्यः यां विद्यां गृह्णाति सा उपनिषत्। 'रहस्यविद्या' 'अध्यात्मविद्या' वेत्यर्थः। उपनिषत्सु ब्रह्मणः आत्मनः जगतश्च स्वरूपाणि सम्यक् वर्णितानि।

जीवितस्य परमोद्देशः कः? तं प्राप्तुं कः उपायः वर्तते? इत्यादयः विचाराः उपनिषत्सु चर्चिताः। तासां उपदेशः वेदान्त इति नाम्ना प्रसिद्धः।

उपनिषदां भाषा सरला भवति। अर्थस्तु अतीव गम्भीरः। भाषा–शैली तु अतीव मनोहरा। सा निराडम्बरा शैली पाठकानां हृदयं स्पृशति।

अस्मिन् पाठे गार्गी नाम ज्ञानसम्पन्ना महिला परमज्ञानिना याज्ञवल्क्येन सह चर्चां करोति। कस्मिन् इदं जगत् एकीभूतम् इति गार्ग्याः प्रश्नः। इदं जगत् आकाशे एकीभूतम् इति याज्ञवल्क्यस्य उत्तरम्। 'कस्मिन् आकाशः एकीभूतः? इति पुनः गार्ग्याः प्रश्नः। 'अक्षरे ब्रह्मणि एव सर्वम् एकीभूतम्। सर्वं ब्रह्मणः अनुशासनेन स्वव्यापारेषु निरतम्' इति याज्ञवल्क्यस्य उपदेशः।

**वाचक्नवी** — वचक्नोः अपत्यं स्त्री। वचक्नुः गार्ग्याः पिता। **उवाच** — वच् धातोः लिट्. प्र. पु. ए.। **हन्त** — अव्ययम्; हर्षं विस्मयं वा सूचयति; अत्र केवलं वाक्यारम्भं सूचयति। **प्रक्ष्यामि** — 'प्रच्छ्' धातोः लृट् (भविष्यत्). उ.पु.ए.। **वक्ष्यति** —

वच् धातोः लृट् प्र, पु. ए. । **ब्रह्मोद्यम्** — ब्रह्म वेदः, तस्य वदनम् (व्याख्यानम्)। **पृच्छ**— प्रच्छ् धातोः लोट् म. पु. ए.

**काश्यः** — काश्यां भवः (काशीक्षेत्रे जातः) कश्चन राजा । **वैदेहः** —विदेहानां राजा । **उग्रपुत्रः** — उग्रवंशस्य (शूरवंशस्य) पुत्रः । **उज्ज्यम्** — (धनुःशब्दस्य विशेषणम्)· उद्गता (शिथिलीकृता) ज्या यस्य तत् । **अधिज्यं**— अधिगता (आरोपिता) ज्या यस्य तत् । ज्या–मौर्वी, धनुःसूत्रम् । उज्ज्यं धनुः अधिज्यं कृत्वा — धनुषः ज्या शिथिलीकृता आसीत्; तां पुनः धनुषि बद्ध्वा इत्यर्थः । **बाणवन्तौ** — शरौ; शराग्रे विद्यमानस्य वंशखण्डस्य बाण इति नाम, अतः शरौ बाणविशिष्टौ भवतः । **सपत्नातिव्याधिनौ** — सपत्नस्य (शत्रोः) अतिव्याधिनौ (अतीव पीडाकरौ) (बाणवन्तौ इत्यस्य विशेषणम्) । **उपोत्तिष्ठेत्** — समीपे उत्तिष्ठेत् — स्था धातोः विधिलिङ् प्र. पु ए. । **उपोदस्थाम्** — उत्थितवती अस्मि । अत्र द्वौ प्रश्नौ कष्टतरौ भवतः । तयोः दुरुत्तरत्वं सूचयितुं शरयोः दृष्टान्तः दत्तः ।

**अवाक्** — अधः । **आचक्षते** — (वदन्ति) — आ+चक्ष् धातोः लट् प्र. पु. व. । **ओतं प्रोतम्** — एकीभूतम्; संबद्धम् । अत्र 'यदूर्ध्वं दिवः' इत्यादिना यदुक्तं तत् सूक्ष्मं सूत्रम् । तस्मिन् सूत्रे सर्वे लोकाः प्रोताः । सर्वाणि भूतानि च मालायां मणयः इव प्रोतानि भवन्ति । कस्मिन् तत् सूत्रं ओतं च प्रोतं च इति प्रश्नः ।

**आकाशे एव तदोतं च प्रोतं च** — यत् सूत्रम् इति उच्यते तत्सर्वम् जगत् आकाशे एकीभूतम् । भूत-वर्तमान-भविष्यदिति त्रयः कालाः । त्रिभिः कालैः विशिष्टं सूत्रात्मकं जगत् । इदं जगत् कालातीते आकाशे ओतं च प्रोतं च । **कस्मिन् आकाशः ओतश्च प्रोतश्च** — कालत्रयातीतः आकाशः वर्णयितुं अशक्यः । ततः अपि अक्षरं नाम ब्रह्म वर्णयितुमशक्यम् । तस्मिन् आकाशः ओतश्च प्रोतश्चेति अग्रे वक्ष्यते ।

**अक्षरम्**— यत् न क्षरति (विनश्यति) तत् अक्षरम् । तत् ब्रह्म । ब्राह्मणाः ब्रह्मज्ञानिनः ।

**अस्थूलम्, अनणु, अह्रस्वम् अदीर्घम्** — स्थूलम्, दीर्घम् इति एतैः चतुर्भिः लोके पदार्थानां परिमाणानि उक्तानि । अक्षरस्य विषये एतानि परिमाणानि प्रतिषिद्धानि । अनेन द्रव्यधर्मः प्रतिषिद्धः भवति । तद् अक्षरं न द्रव्यम् इत्यर्थः । **अलोहितम्** — रक्तवर्णः लोहितवर्णः, तद्रहितम् । **अस्नेहम्** — स्नेहगुणरहितम् । **अच्छायं** — छायारहितम् । **अतमः** — तमोरहितम् । **अवायुः** — वायुरहितम् । **अचक्षुष्कम्** — न चक्षुः अस्य करणं भवति । तस्मात् अचक्षुष्कम् । **अमात्रम्** — मीयते येन तत् मात्रम् (मानम्) तेन न किञ्चित् मीयते इति तत् अमात्रम् । **अनंतरम्** — अंतरं–छिद्रम् । यत् छिद्ररहितम् तत् अनंतरम् । **न तत् अश्नाति किञ्चन** — न तत्

भक्षयितृ भवति । **न तदश्नाति कश्चन** — न तत् भक्ष्यं भवति । एवं तद् अक्षरं सर्वं विशेषणरहितम् । तत् एकमेव अद्वितीयम् । तत् न केनापि विशेषणेन योज्यते इति भाव: ।

**सूर्याचन्द्रमसौ** — सूर्यश्च चन्द्रमाश्च । अयं देवता-द्वन्द्वसमास: । देवताद्वन्द्वसमासे पूर्वपदस्य आकार: भवति । **विधृतौ**—स्वतन्त्रत्वेन निर्मितौ । देशकालनिमित्तै: नियताभ्याम् उदयास्ताभ्यां वृद्धिक्षयाभ्यां च युक्तौ । **द्यावापृथिवी** — द्यौश्च पृथिवीच । अयमपि देवताद्वन्द्वसमास: । **विधृते** — स्त्रीलिङ्गरूपम्, प्र.वि.द्वि.। **निमेषा: मुहूर्ता: ....संवत्सरा:** — एते कालवाचका: । **प्राच्य: नद्य:** — पूर्वदिग्गमना: नद्य: । **श्वेतेभ्य: पर्वतेभ्य:** — हिमवदादिभ्य: । **प्रतीच्य:** पश्चिमदिग्गमना: । **ददत:** — धा धातो: वर्तमान कृदंत: (शतृप्रत्ययान्त:) प्र. वि, ब. । **यजमानम्** — यज्ञस्य कर्तारम् । **दर्वीम्** — दर्वीहोमम् । **अन्वायत्ता:** — अनुगता: ।

---

# ३. धिगर्थाः कष्टसंश्रयाः

[ जीवितस्य भरणार्थम् अर्थानाम् आर्जनं कर्तव्यमेव। अर्थानाम् आर्जनं तु कष्टम्। तस्मादपि कष्टतरं आर्जितानाम् अर्थानां रक्षणम्। देवशर्मनाम्नः परिव्राजकस्य कथायाम् अस्य विषयस्य निदर्शनं विद्यते। अर्थसञ्चयस्य रक्षणे न कोऽपि विश्वसनीयः विशेषतश्च अज्ञातपुरुषः। धूर्ताः सर्वदा अन्येषाम् अर्थसङ्ग्रहम् अपहर्तुं सन्नद्धाः भवन्ति, यथा अत्र कथायाम् आषाढभूतिः। देवशर्मा तु धूर्ते विश्वासं कृत्वा वञ्चितः बभूव। एषः सर्वः देवशर्मणः स्वयंकृतापराधः। अपराधः यस्य कस्यापि भवतु, इदं तु स्थितम्— 'अर्थाः कष्टसंश्रयाः' इति। ]

अस्ति कस्मिंश्चिद्विविक्तप्रदेशे मठायतनम्। तत्र देवशर्मा नाम परिव्राजकः प्रतिवसति स्म। तस्यानेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात् कालेन महती वित्तमात्रा संजाता। ततः स न कस्यचिद्विश्वसिति। नक्तंदिनं कक्षान्तरात्तां मात्रां न मुञ्चति। अथवा साधु चेदमुच्यते—

अर्थानामार्जने दुःखमार्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं, धिगर्थाः कष्टसंश्रयाः ॥ १ ॥

अथाषाढभूतिर्नाम परवित्तापहारी धूर्तस्तामर्थमात्रां तस्य कक्षान्तरगतां लक्षयित्वा व्यचिन्तयत्— 'कथं मयास्येयमर्थमात्रा हर्तव्या ?' इति। तदत्र मठे तावद्दृढशिलासंचयवशाद्भित्तिभेदो न भवति उच्चैस्तरत्वाच्च द्वारेण प्रवेशो न स्यात्। तदेनं मायावचनैर्विश्वास्याहं छात्रतां व्रजामि, येन स विश्वस्तः कदाचिन्मम हस्तगतो भविष्यति। उक्तं च,—

निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात् स्फुटवक्ता न वञ्चकः ॥ २ ॥

एवं निश्चित्य तस्यान्तिकमुपगम्य 'ॐ नमः शिवाय' इति प्रोच्चार्य साष्टाङ्गं प्रणम्य च सप्रश्रयमुवाच— 'भगवन्! असारः संसारोऽयम्। गिरिनदीवेगोपमं यौवनम्, तृणाग्निसमं जीवितम्, शरदभ्रच्छायासदृशा भोगाः, स्वप्नसदृशो मित्रपुत्रकलत्र-भृत्यवर्गसंबन्धः, एवं मया सम्यक्परिज्ञातम्। तत्किं कुर्वतो मे संसारसमुद्रोत्तरणं

भविष्यति ? ।' तच्छ्रुत्वा देवशर्मा सादरमाह— 'वत्स ! धन्योऽसि यत्प्रथमे वयस्येवं विरक्तभावः । उक्तं च,—

पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ? ॥ ३ ॥

आदौ चित्ते ततः काये सतां सम्पद्यते जरा ।
असतां तु पुनः काये, नैव चित्ते कदाचन ॥ ४ ॥

यच्च त्वं मां संसारसागरोत्तरणोपायं पृच्छसि, तच्छ्रूयताम्—

शूद्रो वा यदि वाऽन्योऽपि चाण्डालोऽपि जटाधरः ।
दीक्षितः शिवमन्त्रेण स भस्माङ्गी शिवो भवेत् ॥ ५ ॥

षडक्षरेण मन्त्रेण पुष्पमेकमपि स्वयम् ।
लिङ्गस्य मूर्ध्नि यो दद्यान्न स भूयोऽभिजायते ॥ ६ ॥

तच्छ्रुत्वाऽऽषाढभूतिस्तत्पादौ गृहीत्वा सप्रश्रयमिदमाह— 'भगवन् ! तर्हि दीक्षया मेऽनुग्रहं कुरु ।' देवशर्मा आह— 'वत्स ! अनुग्रहं ते करिष्यामि । परंतु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यम् । यत्कारणं निःसङ्गता यतीनां प्रशस्यते, तव च ममापि च । उक्तं च,—

दुर्मन्त्रान्नृपतिर्विनश्यति, यतिः सङ्गात्, सुतो लालना-
द्विप्रोऽनध्ययनात्, कुलं कुतनयाच्छीलं खलोपासनात् ।
मैत्री चाप्रणयात्, समृद्धिरनयात्, स्नेहः प्रवासाश्रयात्,
स्त्री गर्वादनवेक्षणादपि कृषिस्त्यागात्, प्रमादाद्धनम् ॥ ७ ॥

तत्त्वया व्रतग्रहणानन्तरं मठद्वारे तृणकुटीरके शयितव्यम्' इति । स आह— 'भगवन् ! भवदादेशः प्रमाणम् । परत्र हि तेन मे प्रयोजनम्' । अथ कृतशयनसमयं देवशर्माऽनुग्रहं कृत्वा शास्त्रोक्तविधिना शिष्यतामनयत् । सोऽपि हस्तपादावमर्दनादिपरिचर्यया तं परितोषमनयत् । पुनस्तथापि मुनिः कक्षान्तरान्मात्रां न मुञ्चति । अथैवं गच्छति काल आषाढभूतिश्चिन्तयामास— 'अहो न कथंचिदेष मे विश्वासमागच्छति तत्किं दिवापि शस्त्रेण मारयामि, किंवा विषं प्रयच्छामि, किंवा पशुधर्मेण व्यापादयामि ?' इति । एवं चिन्तयतस्तस्य

देवशर्मणोऽपि शिष्यपुत्रः कश्चिद्ग्रामादामन्त्रणार्थं समायातः। प्राह च— 'भगवन्! पवित्रारोपणकृते मम गृहमागम्यताम्' इति। तच्छ्रुत्वा देवशर्माऽऽषाढभूतिना सह प्रहृष्टमनाः प्रस्थितः। अथैवं तस्य गच्छतोऽग्रे काचिन्नदी समायाता। तां दृष्ट्वा मात्रां कक्षान्तरादवतार्य कन्थामध्ये सुगुप्तां निधाय, स्नात्वा, देवार्चनं विधाय, तदनन्तरमाषाढभूतिमिदमाह— 'भो आषाढभूते! यावदहं पुरीषोत्सर्गं कृत्वा समागच्छामि तावदेषा कन्था योगेश्वरस्य सावधानतया रक्षणीया।' इत्युक्त्वा गतः। आषाढभूतिरपि तस्मिन्नदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः। देवशर्मापि छात्रगुणानुरञ्जितमनाः सुविश्वस्तो यावदुपविष्टस्तिष्ठति तावत्सुवर्णरोमदेहयूथमध्ये हुड्डयुद्धमपश्यत्। अथ रोषवशाद्धुड्डयुगलस्य दूरमपसरणं कृत्वा भूयोऽपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो भूरि रुधिरं पतति; तच्च जम्बुको जिह्वालौल्येन रङ्गभूमिं प्रविश्यास्वादयति। देवशर्मापि तदालोक्य व्यचिन्तयत्— 'अहो मन्दमतिरयं जम्बुकः। यदि कथमप्यनयोः संघट्टे पतिष्यति तन्नूनं मृत्युमवाप्स्यतीति वितर्कयामि'। क्षणान्तरे च तथैव रक्तास्वादनलौल्यान्मध्ये प्रविशंस्तयोः शिरःसंपाते पतितो मृतश्च श्रृगालः। देवशर्मापि तं शोचमानो मात्रामुद्दिश्य शनैः शनैः प्रस्थितो यावदाषाढभूतिं न पश्यति ततश्चौत्सुक्येन शौचं विधाय यावत्कन्थामालोकयति तावन्मात्रां न पश्यति! ततश्च 'हा हा मुषितोऽस्मि' इति जल्पन्पृथिवीतले मूर्छया निपपात।

## टिप्पणी

इयं कथा पञ्चतन्त्रनाम्नः ग्रन्थस्य मित्रभेदनामकात् प्रथमतन्त्रात् सङ्गृहीता। भारतदेशः नीत्युपदेशपराणां दृष्टान्तकथानां जन्मस्थानम्। एतासु कथासु पशुपक्षिणः पात्रं वहन्ति, मनुष्याणाम् आचारविचारादिकं च अनुकुर्वन्ति। एताः कथाः भारतदेशात् बहिरपि निर्गत्य 'ईसोप-कथाः' इत्यादिरूपान्तरं प्रापुः। भारतदेशे अनादिकालात् एतासां प्रचारः आसीत्। एतासां कथानां सङ्ग्रहाणां बह्व्यः आवृत्तयः आसन् इति सम्भावयितुं शक्यते। तथापि संस्कृत-साहित्यपरम्परायां पञ्चतन्त्रं हितोपदेशश्चेति द्वौ सङ्ग्रहौ परिनिष्पन्नरूपेण उपलभ्येते। अनयोः मध्ये हितोपदेशः पञ्चतन्त्रस्यैव रूपान्तरम् इति स्पष्टमेव।

पञ्चतन्त्रम् अतीव जनादरणीयः कथासङ्ग्रहः। अस्य प्रसिद्धिः भारतदेशात् बहिरपि विस्तृता वर्तते। पर्षियन्, अरेबिक् इत्यादि-भाषासु यूरोप्-देशभाषासु च पञ्चतन्त्रस्य अनुवादाः विद्यन्ते। एवं पञ्चतन्त्रं विश्वसाहित्यस्य भागत्वेन परिगण्यते। पञ्चतन्त्रे

पञ्चतन्त्राणि सन्ति। तानि मित्रभेदः, मित्रप्राप्तिः, काकोलूकीयम्, लब्धप्रणाशम्, अपरीक्षित-कारकं चेति। अस्य ग्रन्थस्य कर्ता विष्णुशर्मा नाम। सः 'महिलारोप्य' नाम्नि नगरे न्यवसत् इति पञ्चतन्त्रस्य कथामुखात् ज्ञायते। कथासङ्ग्रहस्य रचनाप्रसङ्गोऽपि तत्रैव वर्णितः। महिलारोप्ये अमरशक्तिर्नाम राजा आसीत्। तस्य पुत्राः मूर्खाः शास्त्राध्ययन-विमुखाश्च आसन्। तेषाम् अध्यापनार्थं राजा विष्णुशर्माणं नियोजयामास। विष्णुशर्मा च पञ्चतन्त्रात्मकं कथासङ्ग्रहं कृतवान्। सः कथाप्रवचनद्वारा राजकुमारान् नीतिशास्त्रा-भिज्ञान् चकार।

पञ्चतन्त्रस्य भाषा सरला मनोहरा च वर्तते। कथासु नीतिं ग्राहयितुं श्लोकाः प्रयुक्ताः। एवं पञ्चतन्त्रस्थाः कथाः गद्यपद्यात्मिकाः भवन्ति। प्रस्तुतकथायां धूर्तः आषाढभूतिः कथं देवशर्मनाम्नः परिव्राजकस्य अर्थसङ्ग्रहम् अपहृतवान् इति निरूप्यते। अर्थानां रक्षणं कष्टमिति नीतिः उपदिष्टा।

**विविक्तप्रदेशे** — निर्जने स्थले। **मठायतनम्** — मठरूपं वासस्थानम्। **परिव्राजकः** — संन्यासी। **प्रतिवसति स्म** — वर्तमानक्रियापदस्य 'स्म' योगे भूतकालार्थः समुत्पद्यते। **वित्तमात्रा** — धनसङ्ग्रहः। **विश्वसिति** — वि+श्वस् धातोः लट् प्र. पु. ए.। **नक्तन्दिनम्** — दिवारात्रम्। **कक्षान्तरात्** — बाहुनिम्न-प्रदेशमध्यात्। **आर्जितानाम्** — सम्पादितानाम्। **आयः** — लाभः। **व्ययः** — नाशः। **लक्षयित्वा** — दृष्ट्वा। **व्यचिन्तयत्** — वि+चिन्त् धातोः लङ् प्र. पु. ए.। **हर्तव्या** — हर्तुं योग्या। **स्यात्** — अस्धातोः विधिलिङ् प्र. पु. ए.। **मायावचनैः** — कपटवचोभिः। **सप्रश्रयम्** — विनय-पूर्वम्। **प्रणम्य** — प्र+नम्+य, ल्यबन्ताव्ययम्। **गिरिनदीवेगोपमः** — निर्झरसमानवेगः। **तृणाग्निसमम्** — क्षणभङ्गुरम्। **प्रथमे वयसि** — नवयौवने। **धातुषु क्षीयमाणेषु** — धातवः रक्तमांसादयः शरीरस्थाः सप्त। तेषु क्षीयमाणेषु, वार्धक्ये इति भावः। **असताम्** — दुर्जनानाम्। **सम्पद्यते** — सम्+पद् धातोः लट् प्र. पु. ए.। **श्रूयताम्** — श्रुधातोः कर्मणि लोट् प्र. पु. ए.। **दीक्षितः** — दीक्षां प्राप्तः (दीक्षाबद्धः)। **दद्यात्** — 'दा'धातोः विधिलिङ् प्र. पु. ए.। **निस्सङ्गता** — सङ्गराहित्यम्। **खलः** — दुर्जनः **अनयः** — अनीतिः। **अनवेक्षणात्** — अदर्शनात्। **अनुग्रहम्** — दीक्षादानरूपम्। **परितोषः** — सन्तोषः। **व्यापादयामि** — मारयामि। **पवित्रारोपणकृते** — संस्कार-विशेषार्थम्। **पुरीषोत्सर्गम्** — मलविसर्जनम्। **यूथः** — समूहः। **हुडुयुद्धम्** — मेष-युद्धम्। **जम्बुकः** — शृगालः। **मुषितः** — वञ्चितः

---

# ४. दत्तभुक्तफलं धनम्

[ लोके धनस्य सम्पादनाय सर्वे कार्यतत्पराः सन्ति। अल्पं वा प्रभूतं वा धनं तैः सम्पाद्यते। केचन जनाः आर्जितं सर्वं धनं व्ययीकुर्वन्ति। अन्ये केचन जीवितस्य सौकर्याण्यपि परित्यज धनं गोपायन्ति। अत्र अयं प्रश्नः यत् धनस्य किं साधु फलम् इति। अस्य प्रश्नस्य उत्तरम् अस्मिन् गद्यभागात् ज्ञातव्यम्। सोमिलकनाम्नः कौलिकस्य कथा अत्र निरूपिता। द्वयोः वणिक्पुत्रयोः वृत्तान्तः दृष्टान्तत्वेन प्रयुक्तः.। अनेन दृष्टान्तेन लोके दानं भोगश्च धनस्य द्वे फले इति समर्थ्यते। ]

कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको वसति स्म। स च अनेकविधपटरचनारञ्जितानि पार्थिवोचितानि सदा एव वस्त्राणि उत्पादयति। परं तस्य च अनेकविधपट्टरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमपि अर्थमात्रं सम्पद्यते। अथ अन्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसम्पादनविज्ञानिनो महर्द्धिसम्पन्नाः। तान् अवलोक्य स स्वभार्यामाह— "प्रिये! पश्य एतान् स्थूलपट्टकारकान् धनकनकसमृद्धान्। तदधारणकं मम एतत् स्थानम्। तदन्यत्र उपार्जनाय गच्छामि।' सा प्राह— 'भोः प्रियतम! मिथ्याप्रलपितमेतद् यत् अन्यत्र गतानां धनं भवति, स्वस्थाने न भवति। उक्तं च

उत्पतन्ति यदाकाशे विपतन्ति महीतले।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥ १ ॥

तस्मादत्र एव व्यवसायपरो भव।' कौलिक आह, 'प्रिये! न सम्यगभिहितं भवत्या। व्यवसायं विना कर्म न फलति। उक्तं च,

पश्य कर्मवशात् प्राप्तं भोज्यकालेऽपि भोजनम्।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन ॥ २ ॥

तन्मया अवश्यं देशान्तरं गन्तव्यम्।' इति निश्चित्य वर्द्धमानपुरं गतः। तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः। अथ अर्धपथे गच्छतः तस्य कदाचिदटव्यां पर्य्यटतो भगवान् रविरस्तमुपगतः। तदा असौ व्यालभयात् स्थूलतरवटस्कन्धमारुह्य यावत् प्रसुप्तः तावत् निशीथे स्वप्ने द्वौ पुरुषौ रौद्राकारौ परस्परं प्रजल्पन्तौ अशृणोत्। तत्रैक आह, 'भोः कर्तः! त्वं

सम्यक् न वेत्सि ? यदस्य सोमिलकस्य भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति । तत् किं त्वया अस्य सुवर्णशतत्रयं प्रदत्तम् ।' स आह, 'भोः कर्मन्, मया अवश्यं दातव्यं व्यवसायिनां, तत्र च तस्य परिणतिः त्वदायत्ता' इति ।

अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिम् अवलोकयति, तावत् रिक्तं पश्यति । ततः साक्षेपं चिन्तयामास, 'अहो ! किमेतत् । महता कष्टेन उपार्जितं वित्तं हेलया क्वापि गतम् । तद्व्यर्थश्रमोऽकिञ्चनः कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि' । इति निश्चित्य तदेव पत्तनं गतः । तत्र च वर्षमात्रेणापि सुवर्ण-शतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः । यावत् अर्धपथे भूयोऽटवी-गतस्य भगवान् भानुरस्तं जगाम । अथ सुवर्णनाशभयात् सुश्रान्तोऽपि न विश्राम्यति । केवलं कृतगृहोत्कण्ठः सत्वरं व्रजति । अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ च शृणोति । तत्रैकः प्राह:— 'भोः कर्तः ! किं त्वया एतस्य सुवर्णशतपञ्चकं प्रदत्तम् । तत् किं न वेत्सि ? यद्भोजनाच्छा-दनाभ्यधिकमस्य किञ्चिन् नास्ति' । स आह 'भो कर्मन्, मया अवश्यं देयं व्यवसा-यिनाम् । तस्य परिणामः त्वदायत्तः । तत् किं मां उपालम्भयसि ?' तत् श्रुत्वा सोमिलको यावद्ग्रन्थिम् अवलोकयति तावत् सुवर्णं नास्ति । ततः परं दुःखमापन्नो व्यचिन्तयत् — 'अहो ! किं मम धनरहितस्य जीवितेन । तदत्र वटवृक्ष आत्मानमुद्बध्य प्राणान् त्यजामि ।' एवं निश्चित्य दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायाम् आत्मानं निबध्य यावत् प्रक्षिपति तावदेकः पुमान् आकाशस्थ एव इदमाह, 'भो भोः सोमिलक ! मैवं साहसं कुरु । अहं ते वित्तापहारको, न ते भोजनाच्छादनाभ्यधिकां वराटिकामपि सहामि । तद्गच्छ स्वगृहं प्रति । अन्यच्च भवदीय-साहसेन अहं तुष्टः । तथा, मे न स्यात् व्यर्थं दर्शनम् । तत् प्रार्थ्यताम् अभिष्टो वरः कश्चित् ।' सोमिलकः आह, — 'यदि एवं तद्देहि मे प्रभूतं धनम् ।' स आह, — 'भोः ! किं करिष्यसि भोग-रहितेन धनेन ? यतः तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति । उक्तं च,

> किं तया क्रियते लक्ष्म्या या वधूरिव केवला ।
> याच वेश्येव सामान्या पथिकैरुपभुज्यते ॥ ३ ॥

सोमिलक आह—'यद्यपि भोगो नास्ति तथापि तद्भवतु । उक्तं च

> कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा ।
> सेव्यते स नरो लोके यस्य स्यात् वित्तसञ्चयः ॥ ४ ॥

पुरुष आह, 'यदि एवं तद्गच्छ भूयोऽपि वर्द्धमानपुरम्। तत्र द्वौ वणिक्-पुत्रौ वसतः, एको गुप्तधनो द्वितीय उपभुक्तधनः। ततः तयोः स्वरूपं बुद्ध्वा एकस्य वरः प्रार्थनीयः। यदि ते धनेन प्रयोजनम् अभक्षितेन, ततः त्वामपि गुप्तधनं करोमि। अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमी'ति। एवमुक्त्वा अदर्शनं गतः। सोमिलकोऽपि विस्मितमना भूयोऽपि वर्द्धमानपुरं गतः। अथ सन्ध्यासमये श्रान्तः कथमपि तत् पुरं प्राप्तो गुप्तधनगृहं पृच्छन् कृच्छ्रात् लब्ध्वा अस्तमितसूर्ये प्रविष्टः। अथ असौ भार्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद्गृहं प्रविश्योपविष्टः। ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किञ्चिदशनं दत्तम्। ततश्च भुक्त्वा तत्र यावत् सुप्तो निशीथे पश्यति तावत् तौ अपि द्वौ पुरुषौ परस्परं मन्त्रयतः। तत्र एकः आह-- भोः कर्तः! किं त्वया अस्य गुप्तधनस्य अन्योऽधिको व्ययो निर्मितो यत् सोमिलकस्य अनेन भोजनं दत्तम्। तदयुक्तं त्वया कृतम्।' स आह — 'भोः कर्मन्! न मम अत्र दोषः। मया पुरुषस्य लाभप्राप्तिर्दातव्या। तत्परिणतिः पुनः त्वदायत्ते'ति। अथ असौ यावदुत्तिष्ठति तावद् गुप्तधनो विसूचिकया खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति। ततो द्वितीयेऽह्नि तद्दोषेण कृतोपवासः सञ्जातः। सोमिलकोऽपि प्रभाते तद्गृहात् निष्क्रम्य उपभुक्तधनगृहं गतः। तेनापि च अभ्युत्थानादिना सत्कृतो विहित-भोजनाच्छादन-सम्मानः तस्य एव गृहे भव्यशय्यामारुह्य सुष्वाप। ततश्च निशीथे यावत्पश्यति तावत् तौ एव द्वौ पुरुषौ मिथो मन्त्रयतः। अथ तयोः एकः आह — 'भोः कर्तः! अनेन सोमिलकस्य उपकारं कुर्वता प्रभूतो व्ययः कृतः। तत् कथय कथम् अस्य उद्धारक-विधिः भविष्यति। अनेन सर्वमेतद्व्यहारक-गृहात् समानीतम्।' स आह — 'भोः, कर्मन्! मम कृत्यमेतत्। परिणतिः त्वदायत्ते'ति। अथ प्रभातसमये राजपुरुषो राजप्रसादजं वित्तम् आदाय समायात उपभुक्तधनाय समर्पयामास। तद् दृष्ट्वा सोमिलकः चिंतयामास — 'सञ्चयरहितोऽपि वरमेष उपभुक्तधनो न असौ गुप्तधनः। उक्तं च,

अग्निहोत्रफला वेदाः शीलवित्तफलं श्रुतम्।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ५ ॥

तद्विधाता मां दत्तभुक्तधनं करोतु, न कार्यं मे गुप्तधनेन।' ततः सोमिलको दत्तभुक्तधनः सञ्जातः।

## टिप्पणी

अयं गद्यभाग: पञ्चतन्त्रस्य मित्रसम्प्राप्तिनामकात् तन्त्रात् उद्धृत: । [ धिगर्था: कष्ट-संश्रया: इति पाठस्य टिप्पणीत: पञ्चतन्त्रस्य विषय: ज्ञातव्य: । ] प्रस्तुते गद्यभागे सोमिलकनाम्न: नायकस्य वृत्तान्त: वर्णित: । वायकर्मणि निष्णातेन सोमलिकेन आर्जितं धनं अशनवसनार्थमेव पर्याप्तमासीत् । स्वस्थानात् वर्धमानपुरं गत्वा प्रयत्नपूर्वकं धनं तस्य भागधेये नासीत् । कर्तृपुरुष-कर्मपुरुषयो: संवादात् इदं ज्ञायते । आकाशस्थ: कर्मपुरुष: दु:खितं सोमिलकं सान्त्वयामास । पुनरपि तं वर्धमानपुरं गन्तुं प्रेरयामास । तत्र द्वयो: वणिक्पुत्रयो: वृत्तान्तं विशदीचकार । तयोरेक: गुप्तधन:, अन्यश्च उपभुक्तधन: । गुप्तधनस्य दु:खम्, उपभुक्तधनस्य सौख्यं च साक्षात्कृत्य सोमिलकोऽपि नूनं 'दत्तभुक्तफलं धनम्' इति ज्ञात्वा उपभुक्तधनो भवितुम् ऐच्छत् ।

१, **अधिष्ठाने** — पत्तने । **कौलिक:** — तन्तुवाय: (कुविन्द:, वायक:) । **अनेकविधपटरचनारञ्जितानि** — अनेकविधा: पटेषु रचना:, ताभि: रञ्जितानि । **महर्द्धिसम्पन्ना:** महती ऋद्धि: (सम्पत्) महर्द्धि:, तया सम्पन्ना: (युक्ता:) । **अधारणकम्** — न धारणकम्; असम्पत्प्रदम् (जीविकासम्पद्रहितम्) । **उपार्जनाय** — धनसम्पादनाय । **उत्पतन्ति.... उपतिष्ठन्ति** (श्लोक: १) — प्राप्त्या दैवेन । दैवेन यत् अदत्तं तत् न प्राप्यते । **व्यवसायम्** — प्रयत्नम् । **व्यालभयात्** — व्याघ्रभयात् । **वटस्कन्धम्** — वटवृक्षस्य शाखाम् । **कर्त:** — कर्तृशब्दस्य सम्बोधन प्र. वि. ए. 'हे कर्तृपुरुष' इत्यर्थ: । व्यवसायिने पुरुषाय यथा-योग्यं धनप्रदानं कर्तृपुरुषस्याधीनम् । **कर्मन्** — कर्मपुरुष इत्यर्थ: । सञ्चितस्य धनस्य व्यय: कर्मपुरुषाधीन: । **परिणति:**—फलम्, विपाक:, परिपाक: ।

२. **सुवर्णग्रन्थि:** — सुवर्णनाणकानां सम्पुटम् । **रिक्तम्** — शून्यम् । **साक्षेपं** — सव्याकुलं (सविकारं, सानुशयम् ।) । **कृतगृहोत्कण्ठ:** — गृहे उत्कण्ठा गृहोत्कण्ठा, कृता गृहोत्कण्टा येन स: । **परिणाम:** — परिणति: । **उपालम्भयसि** — उप + आ + लभ् धातो: णिजन्तात् लट् प्र. पु. ए । **वराटिकाम् अपि** — अल्पमपि । **प्राप्ति:** — लाभ: । **किं तया.... उपभुज्यते** — (श्लोक– ३) — वधूरिव — पुत्रस्य पत्नी वधू:. सा इव ।

३. **भूयोऽपि** — पुनरपि । **गुप्तधन:** — गुप्तं धनं येन स: । **उपभुक्तधन:** — उपभुक्तं धनं येन स: । **अभक्षितेन** — भोगरहितेन । **विस्मितमना:** — विस्मितं मन: यस्य स: । **भक्तिवर्जितम्** — आदररहितम् । **विसूचिकया** — उदरशूलम् (choler ) **रुजाभिभूत:** — रुजया अभिभूत:, रुजा — व्याधि:, उपताप:, तया सन्तप्त: । **कृतोपवास:** कृत: उपवास: येन स: । **उद्धारकविधि:** — उद्धारकं ऋणमुक्ति:, तस्य विधि: रीति: । **व्यवहारकगृहात्** — धनिकस्य गृहात्, आपणाद् वा । **अग्निहोत्र. . धनम्** — (श्लोक ५) **दारा:** — दारशब्द: पुंसि नित्यबहुवचनान्त: । **दत्तभुक्तफलम्** — दत्तं (दानं) भुक्तं च (भोगश्च) फलं यस्य तत् ।

---

# ५. स तिष्ठतु पुरे मम

[ संस्कृत–साहित्यस्य समुल्लासे राजाश्रयस्य महत्त्वं सर्वैः अङ्गीक्रियते। राज्ञाम् उदाराश्रये कवयः काव्यानि रचयामासुः, पण्डिताश्च शास्त्रार्थगोष्ठीः निरवहन्। एतादृशस्य राजाश्रयस्य विस्तृतं वर्णनं विद्यते भोजप्रबन्धादिषु ग्रन्थेषु। राजसभाः कीदृश्यः आसन्, तासु विद्वांसः कवयः कथं समवेताः बभूवुः, कवितागोष्ठ्यः कथं प्रचलिताः आसन्, इत्यादि–विषयान् ज्ञातुं भोजप्रबन्धः अधीतव्यः। धारानगरस्य भोजराजास्थाने कालिदासादयः कवयः समवेताः पुरस्कृताश्च अभूवन्। इदं तु बोध्यम् — भोजप्रबन्धस्य कल्पितविषयत्वात् भोजस्य कालिदासादीनां च समकालीनत्व-शङ्का न कर्तव्या। अत्र पाठे कालविषयिणीं चर्चां परित्यज्य राजाश्रयस्य चित्रमेव परिशीलनीयम्। ]

ततः कदाचिद्राजा मुख्यामात्यं प्राह—

विप्रोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे।
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम ॥ १ ॥

इति अतः कोऽपि न मूर्खोऽभूद्धारानगरे।

अथ कदाचिद्वन्दितविद्वद्वृन्दे सिंहासनासीने कविशिरोमणौ कवित्वप्रिये प्रियप्रजाबान्धवे भोजराजे, द्वारपाल एत्य प्रणम्य व्यजिज्ञपत्— 'राजन् कोऽपि विद्वान् द्वारि तिष्ठति'। अथ राज्ञा 'त्वरितं प्रवेशय' इत्याज्ञप्ते कश्चिदभ्यगात् विलास इव मूर्तिमान् कवितेव तनुमाश्रितो महेन्द्र इव महीवलयं प्राप्तो विद्वान्। तं दृष्ट्वा सकलापि विद्वत्परिषद्भयकौतुकयोः पात्रमासीत्। स च सर्वान् प्रणिपत्य आस्त। राजा भोजश्च तमालिङ्ग्य प्राह— 'सुकवे भवन्नाम्ना कान्यक्षराणि सौभाग्यावलम्बितानि। कस्य वा देशस्य भवद्विरहः सुजनान् बाधते। ततः कविर्लिखति राज्ञो हस्ते 'कालिदासः' इति। राजा वाचयित्वा पादयोः पतति।

ततस्तत्रासीनयोः कालिदास— भोजयोरासीत्सन्ध्या। राजा 'सखे सन्ध्यां वर्णय' इत्यवादीत्। ततः कालिदासः वर्णयति—

व्यसनिन इव विद्या क्षीयते पङ्कजश्री-
र्गुणिन इव कुदेशे दैन्यमायान्ति भृङ्गाः।
कुनृपतिरिव लोकं पीडयत्यन्धकारो
धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥ २ ॥

ततः कदाचित् द्वारपालकः प्रणम्य भोजं प्राह— 'राजन्, द्रविडदेशात् कोऽपि लक्ष्मीधरनामा कविर्द्वारमध्यास्ते' इति। राजा 'प्रवेशय' इत्याह। स चागत्य तत्र राजानं स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः प्राह— 'देव इयं ते पण्डित-मण्डिता सभा। त्वं च साक्षाद्विष्णुरसि। ततः किं नाम पाण्डित्यं मम। तथापि किंचिद्वच्मि—

> भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम्।
> हरेः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ ३ ॥

इति ततस्तेन परिषच्चमत्कृता। राजा च तस्य प्रत्यक्षरं लक्षं ददौ। पुनः कविराह— 'देव मया सकुटुम्बेनात्र निवासाशया समागतम्।

> क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते।
> अनुकूलः शुचिर्दक्षः कविर्विद्वान् सुदुर्लभः ॥ ४ ॥

ततो राजा मुख्यामात्यं प्राह— 'अस्मै गृहं दीयताम्' इति। ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत् यं निरस्य विदुषे गृहं दीयते। तत्र सर्वत्र भ्रमन् कस्यचित्कुविन्दस्य गृहं वीक्ष्य कुविन्दं प्राह— 'कुविन्द, गृहान्निःसर, तव गृहं विद्वानेष्यति' इति। ततः कुविन्दो राजभवनमासाद्य राजानं प्रणम्य प्राह— 'देव, भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारयति। त्वं तु पश्य मूर्खः पण्डितो वेति।

> काव्यं करोमि न हि चारुतरं करोमि
> यत्नात्करोमि यदि चारुतरं करोमि।
> भूपालमौलिमणिमण्डितपादपीठ
> हे साहसाङ्क कवयामि वयामि यामि ॥ ५ ॥

ततो राजा त्वंकारवादेन वदन्तं कुविन्दं प्राह— 'ललिता ते पदङ्क्तिः कविता-माधुर्यं च शोभनम्, परंतु कवित्वं विचार्य वक्तव्यम्' इति। ततः कुपितः कुविन्दः प्राह— 'देव अत्रोत्तरं भाति। किंतु न वदामि। राजधर्मः पृथग्विद्वद्धर्मात्' इति। राजा प्राह— 'अस्ति चेदुत्तरं ब्रूहि' इति। कुविन्दः प्राह— 'कालिदासादृतेऽन्यं कविं न मन्ये। कोऽस्ति ते सभायां कालिदासादृते कवितातत्त्वविद्विद्वान्।

यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् ।
कासारे दिवसं वसन्नपि पयःपूरं परं ङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ॥ ६ ॥

ततो राजा 'साधु भोः कुविन्द' इत्युक्त्वा तस्याक्षरलक्षं ददौ । 'मा भैषीः' इति पुनः कुविन्दं प्राह ।

ततः कदाचित्कुम्भकारवधू राजगृहमेत्य द्वारपालं प्राह— 'द्वारपाल, राजा द्रष्टव्यः' । स आह— 'किं ते राज्ञा कार्यम्' । सा चाह— 'न तेऽभिधास्यामि नृपाय एव कथयामि' । स सभायामागत्य प्राह— 'देव, कुम्भकारप्रिया काचिद्राज्ञो दर्शनाकाङ्क्षिणी न वक्ति मत्पुरतः कार्यं त्वत्पुरतः कथयिष्यतीति' । राजाह— 'प्रवेशय' । सा चागत्य नमस्कृत्य वक्ति ।

'देव, मृत्खननाद्दृष्टं निधानं वल्लभेन मे ।
स पश्यन्नेव तत्रास्ते त्वां ज्ञापयितुमभ्यगाम्' ॥ ७ ॥

राजा च चमत्कृतो निधानकलशमानयामास । तद्द्वारमुद्घाट्य यावत्पश्यति राजा तावदन्तर्वर्तिद्रव्यमणिप्रभामण्डलमालोक्य कुम्भकारं पृच्छति— 'किमेतत्कुम्भकार' । स चाह—

राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् ।
रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन् ॥ ८ ॥

### टिप्पणी

भोजप्रबन्धः संस्कृत-साहित्ये काचन विशिष्टा कृतिः । क्रि. श. १६ तम-शतकस्य बल्लालसेनः तस्य कर्ता । भोजप्रबन्धे द्वौ भागौ वर्तेते । प्रथमे भागे मुञ्जराजात् अनन्तरं भोजराजेन कथं मालवराज्याधिपत्यं प्राप्तमिति वर्ण्यते । द्वितीये भागे भोजराजस्य उदाराश्रयमधिकृत्य कथाः विरचिताः । तस्य आस्थाने कालिदासः, भवभूतिः, बाणः, दण्डी, मयूरः इत्यादि-कवयः समवेताः इति बल्लालेन समुपकल्पितम् । तेषां कवीनां कालव्यत्यासम् अपरिगणय्य भोजास्थाने समाकलनं केवलं मनोरञ्जनार्थम् इत्यवगन्तव्यम् ।

प्रस्तुते गद्यभागे आदौ एव भोजस्य उद्घोषणा श्रूयते — 'कुम्भकारोऽपि यो विद्वान् सः तिष्ठतु पुरे मम' इति। तदनुसारेण धारानगरे न कोऽपि अविद्वान् न्यवसत्। कालिदास भोजास्थानं प्रविश्य प्रतिष्ठां लभते। तस्य कवीश्वरत्वं सर्वैरपि अङ्गीक्रियते। पश्चात् लक्ष्मीधरकवेः आगमनं तस्य कवितापाटवं च वर्ण्यते। तदनन्तरं कस्यचन कुविन्दस्य कस्यचित् कुम्भकारस्य च कविता–प्रावीण्यं प्रदर्श्यते।

१- **प्राह** — प्र+ब्रूधातोः लट् प्र. पु. ए.। **अभूत्** — भूधातोः लुङ् प्र. पु, ए.।

२. **वन्दितविद्वद्वृन्दे** — विदुषां वृन्दं विद्वद्वृन्दम्, वन्दितं विद्वद्वृन्दं येन सः तस्मिन् (भोजराजे)। **प्रियप्रजाबान्धवे** — प्रजाश्च एताः बान्धवाश्च प्रजाबान्धवाः, प्रियाः प्रजा-बान्धवाः यस्य सः, तस्मिन् (भोजराजे)। **व्यजिज्ञपत्** — वि+ज्ञप्धातोः लुङ् प्र, पु. ए.। **प्रवेशय** — प्र+विश्धातोः णिजन्तात् (प्रेरणार्थकात्) लोट् म. पु. ए.। **आस्त** — आस् धातोः लङ् प्र. पु. ए.

३. **अवादीत्** — वद्धातोः लुङ् प्र. पु. ए.। वच्मि वच्धातोः लट् उ. पु. ए. **भोजप्रतापं....कृशानुः** (श्लोकः ३) — विधाय–कृत्वा, 'वि+धाधातोः करणार्थकत्वम्। निरस्तैः परित्यक्तैः। **हरेः** — अत्र इन्द्रस्य। पविः — वज्रम्। कृशानुः — अग्निः। अत्र ब्रह्मणा तेजःपुञ्जेन भोजप्रतापं सृष्ट्वा अवशिष्टैः तेजःपरमाणुभिः इन्द्रस्य हस्ते वज्रायुधम्, आकाशे भानुः, समुद्रं वाडवाग्निश्च निर्मिताः इति उत्प्रेक्ष्यते। **दीयताम्** — दाधातोः कर्मणि लोट् प्र. पु. ए.। कुविन्दस्य — कौलिकस्य (पटनिर्मातुः)। **निःसर** — निस्+सृधातोः लोट् म. पु. ए.। **आसाद्य** — आ+सद्+ल्यप्, प्राप्य। **पश्य** — दृश्धातोः लोट् म. पु. ए.। **काव्यं....यामि** (श्लोकः ५) — भूपालमौलिमणिमण्डित-पादपीठ — भूपालानां मौल्यः, तेषां मणयः, तैः मण्डितं पादपीठं (पादयोः पीठं) यस्य सः (सम्बोधने)। कवयामि कवितां करोमि। वयामि — वे धातोः लट् उ. पु. ए.। कालिदासात् ऋते–कालिदासं विना। **यत्सारस्वत....सैरिभः** (श्लोक ६) — गुरुकृपा-पीयूषपाकोद्भवम् — गुरोः कृपा गुरुकृपा, गुरुकृपा एव पीयूषं तस्य पाकः, तस्माद् उद्भवः यस्य तत्। पाठप्रतिष्ठाजुषाम् — पाठमात्रेण प्रतिष्ठां जूषन्ति इति पाठप्रतिष्ठाजुषः, तेषाम्। सैरिभः — वन्यमहिषः। दृष्टान्तालङ्कारः। **मा भैषीः** — अभैषीः — भीधातोः लुङ् म. पु. ए ; अत्र 'मा' योगात् लुङ्लकारे 'अ' (अट्) आगमः नास्ति।

४. **अभिधास्यामि** — अभि+धाधातोः लृट् उ. पु. ए. वदिष्यामि। **वक्ति** — वच्धातोः लट् प्र. पु. ए.। **देव....अभ्यगाम्** — (श्लोक ७) ज्ञापयितुम् — विज्ञापयि-तुम्। अभ्यगाम् — अभि+इधातोः लुङ् उ, पु. ए.। **राजचन्द्रम्....अभ्युपागमन्** (श्लोकः ८) राजचन्द्रम् — राजा एव चन्द्रः, तम्। रत्नश्रेणि–मिषात् — रत्नानां श्रेणिः तस्याः मिषात् (व्याजेन)।

---

# ६. शुकनासः चन्द्रापीडम् उपादिशति

[ सत्पुरुषैः सम्यक् प्रणीतः उपदेशः जनानाम् उपकाराय कल्पते, विशेषतः प्रथमे वयसि स्थितानां तरुण–जनानाम् । यौवनारम्भः एव समीचीनः कालः उपदेश-ग्रहणाय । अनर्थपरम्पराभिः दूषिते यौवने उपदेशदानं गतजलसेतुबन्धनम् इव अप्रयोजकं भवति । एवं सार्वकालिकं सत्यं ज्ञात्वा शुकनासः चन्द्रापीडं यौवनारम्भे एव सम्यग् उपदिशति । शुकनासः तारापीडनाम्नः राज्ञः सकलशास्त्र–परिणतः मन्त्री । चन्द्रापीडः यौवराजाभिषेकं प्रतीक्षमाणः तारापीडस्य पुत्रः । अयमेव कालः उपदेशस्य । अयमेव उपदेशः तरुणजनानाम् । ]

एवं समतिक्रामत्सु केषुचिद्दिवसेषु राजा चन्द्रापीडस्य यौवराजाभिषेकं चिकीर्षुः प्रतीहारानुपकरणसम्भारसङ्ग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् शुकनासः सविस्तरमुवाच— "तात चन्द्रापीड, विदितवेदितव्यस्य अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं तु निसर्गत एवानुभेद्यं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम् । अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा । सततममूलमन्त्र–गम्यो विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचवध्यो रागमलावलेपः । गर्भेश्वरत्वम् अभिनवयौवनत्वम्, अप्रतिमरूपत्वम् अमानुषशक्तित्वं चेति महती खल्वनर्थपरम्परा । सर्वाविनयानामेकैकमप्येषामायतनम्, किमुत समवायः ।

यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनीकर-गभस्तयो विशन्ति सुखेनोपदेशगुणाः । गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य । इतरस्य तु हरत्यतिमलिनमपि दोषजातं गुरूपदेशः । अयमेव चानस्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशरशर-प्रहारजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम् । अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानम् । अनुपजातपलितादि–वैरूप्यमजरं वृद्धत्वम् । असुवर्णविरचनमग्राम्यं

कर्णाभरणम् । अपनीतज्योतिरालोकः । नोद्वेगकरः प्रजागरः । विशेषेण राज्ञाम् । विरला हि तेषामुपदेष्टारः । प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात् । उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति । शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । विह्वला हि राजप्रकृतिः । अलीकाभिमानोन्मादकारीणि धनानि । राज्यविषविकारतन्द्रीप्रदा राज्यलक्ष्मीः ।

आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसः चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेरतिनैष्ठुर्यम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। न ह्येवंविधम-परिचितमिह जगति किञ्चिदस्ति यथेयमनार्या । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुणसन्दाननिष्पन्दीकृतापि नश्यति । न क्वचिदपि निर्भरमाबन्धाति पदम् । दुष्टपिशाचीव स्वल्पसत्त्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति । जनं गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वममङ्गलमिव न बहुमन्यते । सुजनमनिमित्तमिव न पश्यति । अभिजातमहिमिव लङ्घयति । शूरं कण्टकमिव परिहरति । दातारं दुःस्वप्नमिव न स्मरति । विनीतं पातकिनमिव नोपसर्पति । मनस्विनमुन्मत्तमिवोपहसति । परस्परविरुद्धं प्रकटयति जगति निजं चरितम् । अमृतसहोदराऽपि कटुविपाका पुरुषोत्तमरताऽपि खलजनप्रिया रेणुमयीव स्वच्छमपि कलुषीकरोति । यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जल-मलिनमेव कर्म केवलमुद्वमति । तथाहि । इयं संवर्धनवारिधारा तृष्णाविष-वल्लीनाम्, आवासदरी दोषाशीविषाणाम्, प्रस्तावना कपटनाटकस्य, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य । अनया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः । सर्वाविनयाधिष्ठानतां च गच्छन्ति । व्यसन-शतसख्यतामुपगता पतितमप्यात्मानं नावगच्छन्ति ।

तदेवंप्राये महामोहकारिणि च यौवने कुमार, तथा प्रयतेथाः, यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न शोच्यसे विद्वद्भिः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्तैः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नाक्षिप्यसे विषयैः । कामं भवान् प्रकृत्यैव धीरः, पित्रा च समारोपितसंस्कारः, तरलहृदयमप्रतिबुद्धं च

मदयन्ति धनानि, तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान्। इदमेव च पुनःपुनरभिधीयसे। विद्वांसमपि सचेतनमपि अभिजातमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नव-राज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरारूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं प्रारब्धदिग्विजयः परि-भ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयं ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति" इयेतावदभिधायोपशशाम।

## टिप्पणी

अयं रमणीयः गद्यभागः बाणस्य कादम्बरीतः सङ्गृहीतः। काव्यक्षेत्रे बाणस्य स्थानम् अत्युन्नतं वर्तते। संस्कृतकविषु प्रायः बाणस्यैव कालविषये न कोऽपि सन्देहः भवितुम् अर्हति। बाणः स्थानेश्वरस्य राज्ञः हर्षवर्धनस्य आस्थानम् अलञ्चकार। क्रि. श. ६०६ तमवर्षादारभ्य ६४७ तमवर्षपर्यन्तं हर्षवर्धनस्य राज्यभारकालः। अयमेव कालः बाणभट्टस्य।

बाणस्य जीवितविषयोऽपि साधारं ज्ञातुं शक्यते। तेनैव विरचिते हर्षचरिते आत्म-वृत्तान्तः सविस्तरं वर्णितः। तद्वृत्तान्तानुसारेण बाणः वत्सगोत्रोद्भवः आसीत्। राजदेवी चित्रभानुश्च तस्य मातापितरौ। शोणानदीतीरे स्थितः 'प्रीतिकूट'नामकः अग्रहारः तस्य वासस्थानम्। शैशवे एव बाणस्य माता पञ्चत्वमगात्। तस्य पिता तं मातृवत् पोषयामास। यदा सः चतुर्दशवर्षीयः सञ्जातः तदा पिताऽपि पञ्चत्वमगात्। पितृवियोगेन सन्तप्तः सः अध्ययनेन शान्तिम् अवाप। वेद-शास्त्र-पुराण-काव्यादिषु प्रावीण्यं प्राप। यौवना-रम्भे स्वतन्त्र-चित्ततया देशदर्शनकुतूहलतया च सः विविधेषु प्रदेशेषु सञ्चचार। प्रवासेषु तस्य विविधकलाभिज्ञाः रसिकाश्च युवानः सखायः आसन्। अचिरादेव सम्पत्सङ्ग्रहस्य व्ययेन निवृत्तकुतूहलः सः स्वस्थानं पुनराजगाम। एकदा सः हर्षवर्धनस्य भ्राता कृष्णेन लिखितं पत्रं प्राप्तवान्। पत्रानुसारेण सः हर्षवर्धनं द्रष्टुम् अजिरावतीतटे मणिपुरं जगाम। सः कृष्णस्य साहाय्येन हर्षवर्धनस्य आस्थाने प्रवेशं प्राप। तत्र पाण्डित्येन साहित्यरचनया च प्रतिष्ठितं स्थानं राज्ञः प्रीतिं च अलभत।

बाणः कादम्बरी हर्षचरितम् इति द्वे गद्यकाव्ये रचयामास। चण्डीशतकं नाम स्तोत्रमपि व्यरचयत्। स पार्वतीपरिणयं नाम नाटकमपि रचितवान् इति केचन विद्वांसः मन्यन्ते। कादम्बरी तस्य उत्कृष्टा कृतिः। तस्यां कादम्बरी-चन्द्रापीडयोः

महाश्वेता–पुण्डरीकयोश्च जन्मान्तरकथासम्बद्धौ प्रेमवृत्तान्तौ समुपवर्णितौ। बाणः इमां कृतिं केनापि कारणेन परिसमाप्तुं न शशाक। तस्य पुत्रः भूषणभट्टः तां परिसमाप्तवान्। हर्षचरितं बाणस्य द्वितीयं गद्यकाव्यम्। तदपि असमग्रं वर्तते। तस्मिन् राज्ञः हर्षवर्धनस्य चरितं निरूपितम्। ऐतिहासिकपुरुषस्य वृत्तान्तवर्णनात् इदं ऐतिहासिकं काव्यमिति गण्यते। चण्डीशतके चण्डी–महिषासुरयोः युद्धं वर्णितम्। तस्मिन् चण्डीदेव्याः पदाघातवर्णनं वर्तते। बाणस्य कृतित्वेन कैश्चित् अङ्गीकृते पार्वतीपरिणयनाटके शिवपुराणोक्तं पार्वती–विवाहवृत्तं विन्यस्तम्।

'गद्यं कवीनां निकषं वदन्ति' इत्युक्तिः गद्यरचनायाः क्लिष्टत्वं सूचयति। बाणस्तु गद्यरचनायामेव विशिष्यते। तस्य गद्यशैली सर्वेषां विमर्शकानां हृदयाह्लादकारिणी वर्तते। वर्णनेषु दीर्घसमासयुक्तानि दीर्घदीर्घतरवाक्यानि प्रयुक्तानि। श्लेषः ,उपमा, विरोधाभासः इत्यादयः अलङ्काराः तस्य गद्यम् अलङ्कुर्वन्ति। बाणस्य वर्णनेषु वैविध्यं विस्तारः परिपूर्णत्वं च विद्यते। 'बाणोच्छिष्टं जगत्सर्वम्' इत्युक्तिः तस्य वर्णनानाम् एतादृशं वैशिष्ट्यं निरूपयति। यद्यपि वर्णनेषु दीर्घदीर्घतरवाक्यानां प्रयोगः विद्यते तथापि संवादेषु रसभावनिरूपणेष च सरलानां वाक्यानां विन्यासोऽपि गणनीयः। उदाहरणार्थं शुकनासोपदेशस्य सन्दर्भः परिशीलनीयः।

प्रस्तुते गद्यभागे शुकनासस्य उपदेशः सङ्गृहीतः। कथासन्दर्भस्तु — तारापीडो नाम उज्जयिनीयो राजा स्वपुत्रस्य चन्द्रापीडस्य यौवराज्याभिषेकं कर्तुम् ऐच्छत्। तदा चन्द्रापीडः अमात्यं शुकनासं द्रष्टुं गतः। शुकनासः तं वात्सल्येन समाहूय विनीतमपि विनीततरं कर्तुम् इच्छन्, आसने उपवेश्य उपादिदेश इति। शुकनासस्य उपदेशे प्राधान्येन त्रयः विषयाः सम्यक् निरूपिताः। यौवनमदस्य दुष्परिणामाः; लक्ष्मीमदस्य दारुणत्वम्, स्वार्थपराणां धूर्तानां प्रभावः इति। एतेषां निरूपणे मनोहराणाम् अतीव समञ्जसानं च दृष्टान्त–रूपक–विरोधाभास–श्लिष्टोपमाद्यलङ्काराणां प्रयोगः कृतः।

१. **यौवराज्याभिषेकम्** — राजकुमाराय उत्तराधिकारार्थं क्रियमाणः संस्कारविशेषः यौवराज्याभिषेकः। **चिकीर्षुः** — कर्तुम् इच्छुः। **उपकरणसम्भारः** — साधनसामग्री, प्रकृते मङ्गलद्रव्याणां समूहः। **आरूढ–विनयम्** — आरूढः विनयः यं सः, तम्। **अधीत-सर्वशास्त्रस्य** — अधीतानि सर्वाणि शास्त्राणि येन तस्य। **अभानुभेद्यम्** — सूर्यकिरणैः नाशयितुम् अशक्यम्। **अपरिणामोपशमः** — परिणामे उपशमः यस्य सः परिणामोपशमः, न परिणामोपशमः। **अनञ्जनवर्तिसाध्यम्** — अञ्जनस्य वर्तिः, न अञ्जनवर्त्या साध्यम्। **अञ्जनवर्तिः** — अन्धत्व–जनकः अञ्जनमयः साधनविशेषः। **दर्पदाहज्वरोष्मा** — दाहश्चासौ ज्वरश्च दाहज्वरः, दर्प एव दाहज्वरः, तस्य ऊष्मा (तापः)। **रागमलावलेपः** — राग एव मलः, तेन अवलेपः।

२. **शास्त्रजलम्** — शास्त्रम् एव जलम् । **कालुष्यम्** — कलुषस्य भावः । **भाजनम्** — पात्रम् । **रजनिकरगभस्तयः** — रजनिकरस्य – चन्द्रस्य गभस्तयः किरणाः । **शूलम्** — वेदनाम् । **अभव्यस्य** — असाधोः । **अनास्वादितविषयरसस्य** — विषयाणां रसः विषयरसः, न आस्वादितः अननुभूतः विषयरसः — विषयरुचिः येन तस्य । **पलितम्** — वार्धक्येन केशानां शौक्ल्यम् । **प्रजागरः** — जागरणम् । **उद्दामदर्पश्वयथुस्थगित–श्रवण–विवराः**— उद्दामश्चासौ दर्पश्च, स एव श्वयथुः, तेन स्थगिते श्रवणयोः विवरे येषां ते; श्वयथुः श्रवण-मलः । **स्थगिते** — प्रतिबद्धे । **गजनिमीलितेन** — अलक्ष्यभावनया नेत्रनिमीलनं गजस्य स्वभावः, तदनुकरणम् अत्र गजनिमीलितम् । **अवधीरयन्तः** — तिरस्कुर्वन्तः । **अलीकम्** — मिथ्या । **तन्द्री** — जडता ।

३. **कल्याणाभिनिवेशी** — कल्याणे अभिनिवेशः अस्य अस्ति इति; अभिनिवेशः– आसक्तिः । **रागः**--रक्तवर्णः, अनुरागः । **एकान्तवक्रताम्** — एकान्तेन – नियमेन वक्रताम् । **नैष्ठुर्यम्** — काठिण्यम्, क्रूरत्वम् । **विरहविनोदचिन्हानि** — विरहसमये विनोदचिन्हानि = मनःसमाधानजनकानि । **दृढगुणसन्दान** — **निष्पन्दीकृता** — दृढाः ये गुणाः तेषां सन्दानम्, तेन निष्पन्दीकृता — निश्चलीकृता । **अमृतसहोदरा अपि कटुविपाका** — कटुपरिणाममुत्पादयन्ती; विरोधाभासः । **आवासदरी** — आवासगुहा । **आशीविषाणाम्** सर्पाणाम् ।

४. **प्रयतेथाः** प्र + यत् धातोः लोट् म. पु. ए. । **अभिजातः** — सत्कुलप्रसूतः । **खलीकरोति** — दुष्टं करोति । **प्रतापमारोपयितुम्** — पराक्रमं प्रतिष्ठापयितुम् । **उप–शशाम** — उप + शम् धातोः लिट् प्र. पु. ए. ।

---

# ७. श्रीकृष्णदौत्यम्

[ महाभारते श्रीकृष्णः पाण्डवानां प्राणप्रियः। सः पुरुषोत्तमः राजनीतिप्रवीणः आध्यात्मिकानां विषयाणां च उपदेशकः। सः पाण्डवानां दूतो भूत्वा कौरवसभां प्रविशत्। तत्र पाण्डवेभ्यः पञ्चग्रामान् दातुं दुर्योधनं प्रार्थयामास। दुर्योधनस्तु तस्य प्रार्थनां निराकरोत्। अत्र श्रीकृष्णस्य राजनीतिनैपुण्यं सुव्यक्तम्। ]

परेद्युर्देवो वासुदेवः सात्यकिविदुरादिभिः समं सभामलङ्कुर्वन् तत्राविर्भवतो नारदादीनृषींश्च मानयन् सर्वलोकसमक्षं परिषदि धृतराष्ट्रमाभाष्याबभाषे— 'ननु भारताग्रच ! वेणवो लोके स्वयं संहत्यावस्थानेन दुरुन्मूला भूत्वा स्वच्छिद्रेणान्तः प्रविशता समीरेण मिथः संघट्टिता निरवशेषं भस्मीभवन्ति। एवं गहना ज्ञातयोऽल्पेनान्तश्छिद्रेण परेषां सुखोच्छेद्या भवन्ति। परोऽपि तज्जनसाहाय्येन विना नालं विपक्षे प्रहर्तुम्। नहि त्सरव्येण दारुणा विना परशुर्वृक्षच्छेदनाय सम्पद्यते। संहतानि तृणान्यपि दुराधर्षाणि हि दृश्यन्ते किं पुनर्महासारास्तव पुत्राः पाण्डवाश्च। यथा सिंहवनयोर्योगे मिथो दुरभिभवत्वं भवति, एवं महारण्यस्थानीयस्य सुपुत्रस्य तव सिंहस्थानीयैः पाण्डवैर्योगोऽस्तु। विषीदन्तु तव दुर्हृदः। निषीदन्तु सुखमेकत्र सुहृदः। आसीदन्तु सर्वेऽप्यमी राजानः स्वं स्वमावासम्। प्रसीदतु भवान्। एतदेव त्वां याचितुमागतोऽस्मि। किं बहुना। त्वदायत्ता अस्य महतो जनस्य स्थितिर्मृतिर्वा। देहि प्राणभिक्षाम्' इति।

अथ नारदाभिरुपदिष्टं न्यायमप्यश्रुत्वैव स्थितं दुर्योधनं धृतराष्ट्राभ्यर्थनया कृष्णः प्रोवाच— 'भोः कुरुपते ! रिपोरतिरिच्यमानबलो विगृह्णीयात्। विपरीतस्तु सन्दधीतेति हि नीतिसारः। बहुशो दृष्टपूर्वं हि तत्र तत्र भीमार्जुनयोर्बलम्। अथवा किमन्येन निदर्शनेन त्वय्येव साक्षिणि स्थिते। एवमवहीनबलस्त्वमतिबलाभ्यां ताभ्यां सह कथमभियोक्तुमीहसे। दुर्बलानां वेतसवृत्तिर्हि परायणम्। तस्मादेतदेव तीर्थीकृत्य पञ्चग्रामोत्सर्गेण सर्वां पृथिवीं शाधि' इति।

दुर्योधनस्तु मुखं व्यावृत्य अवाग्दृष्टिः प्रोवाच— 'भो कंसारे ! केयं विभीषिका। वयं दुर्बला बलिनो वा स्याम। क्षत्रियस्य संयुगे शत्रुणा वधोऽपि वरं न तु तदुपस्थानम्। भाराक्रान्तो हि शिलास्तम्भो भज्येतापि न नमेत्। तस्मा-

स्माकं यद्भावि तद्भवतु। जीवन् दुर्योधनः सूच्यग्रभेद्यामपि भुवं पाण्डवेभ्यो न प्रयच्छेत् किं पुनः पञ्चग्रामान्। किन्तु अनात्मज्ञोऽयं पाण्डवो मताक्षेण शकुनिना द्यूते निर्धनः कृतो यदि तदा कोऽत्र ममापनयः येनं भवान्मां वाक्शल्यैस्तुदति। अथ त्वं मन्यसे मयैव प्रवर्तितं तथापि न दोषः। मम पित्र्यं राज्यं मयि अप्रौढे परैः प्रतार्य हृतं पुनः प्रत्याहृतम्' इति।

कृष्णस्तु सोपहासमुद्धतं चाह— 'अयि नयवादिन् सुयोधन! त्वया न किञ्चिदप्यपकृतं नाम पाण्डवानाम्। कस्तर्हि विषान्नजतुगृहादिना तान् हन्तुमयतिष्ट। ननु तवैवेदं पित्र्यं न पाण्डवानामपि येन सूच्यग्रभेद्याया अपि भुवो न ते भागिनः। स्थिरो भव स्मर्तासि मम वचनम्' इति।

अनन्तरं 'आर्य एते त्वां निगृह्य युधिष्ठिराय प्रदास्यन्ति' इति दुःशासनेनोक्तः स पापो निश्वस्य तत उत्थाय गतः कर्णादिभिः सह कृष्णं निग्रहीतुं मन्त्रयामास। सात्यकिना तद्व्यापारं विदन् भगवान् पुनर्धृतराष्ट्रेण सभां प्रवेशितं तं पापमुवाच 'रे मूर्ख, यन्मन्यसे कृष्णोऽसहाय आगतस्तस्मादेनं भन्त्स्यामीति सर्वं जगदत्रैव दर्शयिष्यामि इत्युक्त्वा विश्वरूपं दर्शयन् धृतराष्ट्रं दिव्येन चक्षुषा योजयामास। सोऽपि तद्रूपं दृष्ट्वा तमाह— 'भगवन्! उपसंहर मे दृष्टिं न हि त्वां दृष्टवत्या अनया दृशा अन्यं द्रष्टुमुत्सहे' इति। स तथेति तद्दृष्टिं तद्रूपं चोपसंहृत्य तानामन्त्र्य निर्गतः कुन्त्यै सर्वं सभावृत्तान्तं न्यवेदयत्।

विक्रमार्जितमेव क्षत्रियस्य प्रशस्यतरं न तु याञ्चयोपनतम्। तस्माद्युद्धमेव प्रवर्ततामिति तयोक्तः कृष्णस्तथेति तामापृच्छ्य प्रस्थितः सन् एकान्ते कर्णमाहूय तस्य कौन्तेयत्वैतिह्यं व्याख्याय पाण्डवपक्षस्वीकरणाय चोदयामास। स तु 'अच्युत! अस्तु नाम मम जन्मादि यथोक्तं तथापि कथं पुत्रनिर्विशेषं पोषितवतीं राधां तत्कुले प्ररूढं सम्बन्धादिकं च तथा भ्रातृनिर्विशेषमादृतवन्तं धर्तराष्ट्रं च प्रयोजनकालेऽकस्मादपहायोभयोरयि कृतघ्नो भवतु कर्णः। चापलपिशुनं खलु शाखाचङ्क्रमणम्। तत् कृतमायासेन' इति तमुक्त्वा स्वगृहमगात्।

ततः प्रभाते जाह्नवीतीरे सवितारमुपतिष्ठमानः कर्णः 'भद्र! वैकर्तनः कौन्तेयोऽसि। अतस्तव भ्रातृणां युधिष्ठिरादिनां सुखदुःखयोः षष्ठांशहरो भव' इति कुन्त्यादिष्टः तत्क्षणं तदनुवदन्त्या अशरीरिण्या वाचा च चोदितः सन् सव्यथमाह

'अयि सूरि ! स्त्रियो निसर्गत एवाशुचयो निस्त्रिंशहृदया आत्मकार्यसाधनैकपरा इत्यत्र किमितःपरं निदर्शनान्तरमन्वेष्टव्यम् । यत्त्वात्मन एव जुगुप्सावहं कर्म कृत्वा सैंहेयस्य औरसस्य सारमेयतां प्रापय्य, पुत्राणां विपत्तिमुत्प्रेक्ष्य इदानीं सुप्तोत्थितेव मां बोधयसि । अथवा कपिध्वजादृतेऽन्यं तव पुत्रं मम शरः शरव्यं न करिष्यति । अतो मया तस्मिन् तेन मयि वा हतेऽपि सर्वथा त्वं पञ्चपुत्रासि । एतदेव त्वद्गर्भवासव्यपदेशस्यानृण्यम्' इति तां विससर्ज ।

## टिप्पणी

अयं गद्यभागः लक्ष्मणसूरेः भारतसङ्ग्रहात् उद्धृतः । भारतसङ्ग्रहः व्यासमहर्षेः महाभारतस्य सङ्क्षेपः । लक्ष्मणसूरिनामा कविः क्रि. श. एकोनविंशशतकस्य उत्तरार्धे विंशशतकस्य प्रथमपादे च आसीत् । तमिलुनाडु–राज्ये पुनल्वेलिग्रामः तस्य जन्मस्थानम् । तस्य पिता मुत्तुसुब्बुपण्डितः । पितृसन्निधौ सः व्याकरणादि–शास्त्राणि अधीतवान् । मद्रास-नगरे 'पच्चयप्प कालेज्' 'सैण्ट् पीटर्स कालेज्' इत्यादि– विद्यालयेषु प्राध्यापकः अभूत् । सर्वेषु शास्त्रेषु पारंगतः अयं पण्डितकविः अनेकान् काव्यप्रबन्धान् रचयामास । तस्य ग्रन्थाः —

१. भागवतपादाभ्युदयम् २. कृष्णलीलामृतम् (द्वे महाकाव्ये) ३. मानससन्देशः ४. वेङ्कटेशस्तवम् (द्वे लघुकाव्ये) ५. डेल्लीसाम्राज्यम् ६. पौलस्त्यवधम् (द्वे नाटके) ७. भारतसङ्ग्रहः ८. रामायणसङ्ग्रहः ९. नलोपाख्यानम् १०. भीष्मविजयः (गद्य काव्यानि) ।

लक्ष्मणसूरेः गद्यशैली अतीव सरला रमणीया च ।

१. **परेद्युः** — परे दिवसे । **वासुदेवः** — वसुदेवस्य अपत्यं पुमान्, श्रीकृष्णः । **मानयन्** — मान् धातोः वर्तमानकृदन्तः, प्र. वि. ए, । **सर्वलोकसमक्षम्** — सर्वजनानां सम्मुखं । **परिषदि** — सभायाम् । **आभाष्य** — आ + भाष् + ल्यप्, संबोध्य । **आबभाषे** — आ + भाष् धातोः लिट् प्र. पु. ए. । **भारताग्र्य** — अग्रे भवः अग्र्यः, भारतेषु अग्र्यः, तस्य संबोधनम् । **संहत्य** — एकीभूय । **दुरुन्मूलाः** — उन्मूलयितुम् अशक्याः । **स्वच्छिद्रेण** — ज्ञातिविषये — मतभेदेन, वेणुविषये — रन्ध्रेण । **समीरेण** — वायुना । **परेषाम्** — शत्रूणाम् । **ज्ञातयः** — दायादाः । **त्सरव्येण दारुणा** — कुठारदण्डेन । **संहतानि** — पिण्डीकृतानि । **दुराधर्षाणि** — अभेद्यानि । **महासाराः** — महान् सारः येषां ते ( ब. स. ) । **दुरभिभवत्वम्** — अजेय्यत्वम् । **दुर्हृदः** — शत्रवः । **विषीदन्तु** — (दुःखम् अनुभवन्तु), वि + षद्धातोः लोट्, प्र. पु. ब. । **त्वदायत्ता** — तव अधीना ।

२. **अतिरिच्यमानबलः** — अधिकबलवान् । **विगृह्णीयात्** — वि + ग्रह् धातोः लिङ्, प्र. पु. ए. । **सन्दधीत** — सम् + धाधातोः लिङ, प्र. पु. ए., सन्धि कुर्यात् । **भीमार्जुनयोः** — भीमश्च अर्जुनश्च तयोः (द्वं. स.) । **वेतसवृत्तिः** — वेतसानां वृत्तिः, शरणागतिः । **परायणम्** — अनन्या गतिः । **तीर्थीकृत्य** — योग्यमिति अङ्गीकृत्य । **उत्सर्गेण** — दानेन । **शाधि** — शास् धातोः लोट्, म. पु. ए. ।

३. **अवाग्दृष्टिः** — अधोमुखः सन् । **संयुगे** — युद्धे । **विभीषिका** — भयोत्पादनम्; क्षेत्रेषु काकादिपक्षीन् भयं उत्पाद्य धान्यगुच्छेभ्यः निवारयितुं कृषीवलैः निर्मितः आकृतिविशेषः । **तदुपस्थानम्** — तत्समीपवर्तनम् । **भाराक्रान्तम्** — भारेण आक्रान्तम् । **सूच्यग्रभेद्याम्** — सूच्याः भेदेन भेत्तुं योग्याम्, अत्यल्पमपि इति भावः । **अनात्मज्ञः** — आत्मानं जानाति इति आत्मज्ञः, न आत्मज्ञः अविवेकी । **मताक्षेण** — द्यूतप्रवीणेन । **अपनयः** — दुर्नीतिः । **पित्र्यम्** — पितुः आगतम्, पित्रार्जितम् । **प्रतार्य** — वञ्चयित्वा ।

४. **नयवादिन्** — राजनीतिकुशलिन् । **विषान्नजतुगृहादिना** — विषमिश्रितान्नदानलाक्षागृहनिर्माणम् इत्यादिना उपायेन । **अयतिष्ट** — यत् धातोः लुङ्, प्र. पु. ए । **आह** — ब्रूधातोः लट् प्र. पु. ए. । **सात्यकिः** — कृष्णसारथेः नाम । **भन्त्स्यामि** — वन्ध् धातोः लृट् उ. पु. ए., बन्धनं करिष्यामि । **उपसंहर** — उप + सम् + हृ धातोः लोट्, म. पु. ए. । **न्यवेदयत्** — नि + विद् धातोः लङ, प्र. पु. ए. ।

५. **विक्रमोपार्जितम्** — पराक्रमेण सम्पादितम् । **याञ्चयोपनतम्** — याचनया प्राप्तम् । **कौन्तेयत्वैतिह्यम्** — कुन्तीपुत्रत्वस्य इतिवृत्तम् । **चोदयामास** — चुद् धातोः लिट्, प्र. पु. ए. । **पुत्रनिर्विशेषम्** — पुत्रसमानम् । **अपहाय** — परित्यज्य । **पिशुनम्** — सूचकम् । **शाखाचङ्क्रमणम्** — पक्षान्तरम्इत्यर्थः । **वैकर्तनः** — विकर्तनस्य अपत्यं पुमान्; विकर्तनः सूर्यः, तस्य पुत्रः, कर्णः इत्यर्थः । **निस्त्रिंशहृदयाः** — क्रूरहृदयवत्यः । **जुगुप्सावहम्** — जुगुप्सा हेयभावना, ताम् आवहति यत् तत् । **सैंहेयस्य** — सिंहशिशोः । **कपिध्वजात्** — अर्जुनात् । **ऋते** — विना । **शरव्यम्** — लक्ष्यम् । **आनृण्यम्** — ऋणपरिहारः । **विससर्ज** — वि + सृज् धातोः लिट्, प्र. पु. ए. ।

---

# ८. गुरुशिष्ययोः समागमः

[ भारतवर्षे अनेके महानुभावाः तदा तदा जन्म प्रापुः। स्वेषामादर्शजीवितेन सदुपदेशेन च ते भारतीयान् सत्पथगामिनः कर्तुं प्रायतन्त। काले काले च ते अवतार्य ज्ञानप्रकाशेन धर्मग्लानिं पर्यहरन्। तेषु देवांशसंभूतेषु मध्ये परिगणनीयौ रामकृष्ण-परमहंसः विवेकानन्दश्च। तौ एकोनविंशतिशतकस्य उत्तरार्धे विंशतिशतकस्य पूर्वार्धे च न्यवसताम्। बङ्गालप्रदेशः तयोः जन्मस्थानम्। रामकृष्णपरमहंसः कलकत्तायां कालिकादेवालये अर्चकः आसीत्। देवतासाक्षात्कारं प्राप्य आनन्दपरवशः तत्रैव जीवितं अनयत्। विवेकानन्दः तस्य शिष्यत्वं स्वीकृत्य तस्य सन्देशं भारते परदेशेषु च प्रसारयामास। गुरुदर्शनात् पूर्वं विवेकानन्दस्य नरेन्द्र इति नाम आसीत्। तदा प्रथमे वयसि वर्तमानस्य तस्य मनसि धर्मविषये सन्देहाः आसन्। तत्परिहारार्थमेव नरेन्द्रः परमहंसस्य सकाशं गतः। तदानीं अभूत् तयोः अपूर्वः समागमः। 'सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति' इत्युक्तरीत्या तयोः समागमः भारतीयानां पुण्यवशादिव सञ्जातः। ]

इयमस्माकं पुण्यभूमिर्भरतमाता महाप्रभावशालिनीति पुराणेतिहासविख्याता विराजते। अनेके धर्मोद्धारकाश्चात्रैव जन्म धृत्वा लोकविख्याता बभूवुः। तथैवात्रापि गतशताब्दे भारतीयमहम्मदीयाङ्ग्लेयसंस्कृतित्रयमुदभूत्परस्परसङ्घर्ष-णाक्रियानिमग्नम्। एतासां संस्कृतीनां सम्मिलनं हि सत्वरजस्तमसां समाहार इवाथवा त्रिवेणीसङ्गम इव पवित्रीकृत्य सम्यक् संयोज्य च जगदादर्शभूतं कर्तुं श्रीरामकृष्णो जात इति भासतेऽद्यापि।

विप्रान्वये जातोऽपि, कृतवेदाभ्यासोऽपि, बाल्ये कृतोद्वाहोऽपि श्रीरामकृष्णो भवचक्रवर्ती भूत्वापि केनचिद्विचित्रतरेणानासक्तियोगेन नलिनीपत्रे जलबिन्दुरिव जीवन्मुक्तो बभूव। महम्मदीयबौद्धक्रैस्तादि–विविधधर्मानधीत्य तत्तन्मतीयग्रन्थाव-लोकनेनाथवा मताचार्योपदेशितद्वारा चाचिरान्निर्मलदृष्ट्या ददर्श सर्वेषां धर्माणा-मद्वैतभावं, भगवतश्च सर्वान्तर्यामित्वम्। सर्वे धर्मा भगवन्मूला इति विज्ञाय, ते बहिर्भिन्ना इति चाजानात्। यथा सर्वे प्रवाहाः समुद्रे समागच्छन्ति तथैव सर्वे धर्माः सर्वेश्वरे भगवति सम्मिलन्तीति निस्संशयं बुबुधे। निजभार्यां मायेति न निनिन्द दुःखकारिणीति न दूरीचकार परन्तु भवतारिणीतिं पत्रैः पुष्पैश्च तां

पूजयामास। जगन्मातरमिव तामाराधयामास स धर्मात्मा। रासमणिनाम्न्या कयाचिद्धनिकसीमन्तिन्या निर्मिते देवालये भवतारिणी— देवताया अर्चको बभूव। देवीदर्शनकातरो शिलामूर्तिपादारविन्दयोरसकृत् शिरो निर्बिभेद, उन्मत्त इव प्रललाप चोच्चैः। तथापि तस्य देवीदर्शनं न लब्धम्। अस्योन्मत्तस्य चरितं क्रमेण देशस्य नानाभागेषु प्रससार।

स्मृत्वा चैनं परमहंसं नरेन्द्रोऽपि तत्र गत्वा स्वसंदेहनिवृत्तिकातरो, स्वस्थचित्तो भवामीति निर्धार्य, तथैव चक्रे। अन्तः प्रविश्य तेजोराशिं, ध्यानासक्तिक्रियार्धनिमीलितनेत्रं, मन्दहाससन्दीप्तमुखारविन्दं, शान्तचित्तमन्तर्मुखं, निराडम्बरं, निष्कलङ्कमविद्यादूरीकरण—क्रियाबद्धकङ्कणं, जाज्वल्यमानतेजसं, जितेन्द्रियं पण्डितोत्तमसहस्रपरिवृतं, श्रीरामकृष्णपरमहंसं हंसमिव भुवि गाढान्धकारनिर्मूलनार्थमवतीर्णं, धूर्जटिमिव साक्षात्कृतावतारं धर्मसंस्थापनार्थं, महाविष्णुमिव प्रशान्ताकारं, बुद्धमिवाहिंसातत्त्वोपदेशनिरतं, सत्यमिव मूर्तिमत्, ज्ञानमिव रूपि, धर्ममिव शरीरिणं, संस्कारमिव देहिनमद्राक्षीदनिमिषलोचनभ्यां च तं द्राक्षारसायनमिव पपौ। जन्मान्तरपुण्यकर्मणां परिपाक इव ईदृग्विधपावनाकृतिसंदर्शनं जनयतीति निस्संशयं मेने। "नूनमयमेव भगवत्प्रतिनिधिः, सर्वथाद्य मया भगवान् दृष्टः" इति तस्यान्तर्वाणी तं कथयितुमारेभे। ततः श्री परमहंसाज्ञप्तस्तु कानिचित्पद्यानि जगौ। तेष्वेकतमस्य पादद्वयमित्थमभूत्:—

"हे चित्त गच्छ निजधाम कुतस्त्वमस्मिन्
लोके किलाटसि यथा परदेशवासः।"

गीतान्ते परमहंसः परमादरेण नरेन्द्रपाणिं गृहीत्वा गुप्तप्रदेशं तं नीत्वा साश्रुकण्ठो गद्गदस्वरेणैवमुवाच चिरकालपरिचित इव 'किमागतोऽसि विलम्बितः, त्वां प्रतीक्षमाणोऽहमेतावन्तं कालं त्वमेव मे हृदयान्तरालनिगूढामात्मशक्तिं सम्यग्विज्ञातुमर्हसि, त्वमेव प्राचीनमहर्षेर्नारायणसखस्य नरस्यावतारो नराणां दुःखनिर्मूलनार्थं भुवमागतः कारणपुरुषः। नरेन्द्रोऽपि वचनमेतच्छ्रुत्वा न केवलं मुग्धो बभूव किंतु चकितो भूत्वा न किमपि कर्तुमजानात्। एवं विचित्रानुभवसञ्जातचित्तक्षोभः कयाचिदपूर्वशक्त्या नीयमानस्स बभौ प्रमञ्जनाकृष्टः कोल इव समुद्रतरङ्गसहस्रमध्ये प्लवमानः। सहस्रभानुसदृशतेजोराशेर्महामहिम्नः परमहंसमूर्तेः पुरतो मूकमिव, गतसंदेहमिव प्रशान्तान्तःकरणमिव जातविशेषशेमुषीविकासमिव

समाकृष्टमिव, मुक्तमिवात्मानमन्यत स नरेन्द्रः। गत्वा गृहं चिरकालं डोलायमान-मानसोऽपि मासानन्तरं पुनरपि दक्षिणेश्वरं द्विगुणितरयेण जगाम।

समागतं नरेन्द्रं प्रीत्यादराभ्यां सम्मान्य पार्श्वे संस्थाप्य तस्य शरीरमाद्यन्तं परामृश्य क्षणार्धेनैव गम्भीरमुखमुद्रामभिनीय तं निश्चललोचनाभ्यां पिबन्निव, परिवर्तयन्निव, वशीकुर्वन्निव ददर्श। अनेन नरेन्द्रस्य भ्रान्तिरुद्भूता भूम्याकाशौ च परस्परस्थानान्तरं प्रापिताविव बभासे; अपि च सर्वाणि वस्तूनि भ्रमणशीलानीव ददृशिरे शिरोग्रीवचङ्क्रमणच्छलस्य तस्य। सहस्रपिशाचसंकुलमिव तस्य हृदयं साध्वसाधिष्ठितं चकाशे। भयाविष्टं तं वीक्ष्य विरागिवर्यस्स पुण्यकृतां धुरि कीर्तनीयो मृदुमधुरोक्तिभिस्सान्त्वयन् सस्मितं तस्य वक्षःस्थलं कराङ्गुलिभिः परामृशत्। यथागता भीरनेनैव कर्मणा तथैव विद्राविता निमेषेण। प्रथम-द्वितीयानुभवाभ्यामित्थं भ्रान्तश्चोन्मत्तः पुनरपि तत्र गत्वा "तस्य वशे न भवाम्य-धुना" इति निर्धार्यापि तस्य स्पर्शमात्रेणैव नष्टस्मृतिरजायत। योगीन्द्रस्तु ईदृशीभिः परीक्षाभिरयमेव लोकोद्धरणार्थमागतो महापुरुष इति निस्संशयं दृढी-चकार चित्ते स्वकीये। शिष्योऽपि नरेन्द्रो गुरुं पर्यैक्षत। एकदा तस्य महानु-भावस्य शय्यायामधस्तान्निष्कमेकं निवेशयामास गुरौ बहिर्गते केनापि कार्येणाकृष्टे। स गुरुः प्रत्यागत्य शय्यामधिश्रित्य सहस्र-वृश्चिकदंशितमिवात्मानममन्यत। तदनु कारणं विचिन्वन् शय्यां परावृत्य सुवर्णनाण्यमपश्यत्। सहसा हसन् स्वपरीक्षार्थं शिष्येण प्रीतिपात्रेण नरेन्द्रेण समाचरितमेतदिति विदित्वा चात्मन्येव तं प्रशस्य प्रकाशं न किमप्युक्त्वा जहास। इत्थं क्रमेण तयोर्मैत्री गाढतरा ववृधे दृढं बद्धमूला च परस्परम्।

## टिप्पणी

अयं गद्यभागः के. एस्. नागराजन् महोदयस्य 'देशभक्तचरितम्' नाम्नः गद्यप्रबन्धात् संगृहीतः। डाक्टरेट्-पदवीभूषितः के. एस्. नागराजन् महोदयः आधुनिककविः बेंगलूरुनगरस्य निवासी। के शेष ऐयर् पण्डितः नागम्माळ महाभागा च तस्य पितरौ। सः भारतसर्वकारे अधिकारी आसीत्, इदानीं निवृत्तश्च। सः संस्कृत-सारस्वतक्षेत्रे गद्यपद्यप्रबन्धनिर्माणेन प्रथितयशाः। तस्य कृतिषु सीतास्वयंवरम्, शबरीविलासम्, उन्मत्तकीचकनाटकम्, स्तोत्र-मुक्ताफलम् इत्येताः प्रसिद्धाः। ज्ञानवृद्धः वयोवृद्धश्च अयं कविः अधुनापि काव्यनिर्माण-तत्परः।

अस्य देशभक्तचरिते भारतपुण्यभूमौ जन्म प्राप्य देशसेवया ज्ञानप्रसारेण च प्रथितयशसां आधुनिकभारतीयानां चरितानि निरूपितानि। तत्र विवेकानन्दचरितात् अयं गद्यभागः संगृहीतः। अत्र विवेकानन्द–रामकृष्णपरमहंसयोः प्रथमःसमागमः सम्यक् वर्णितः। अस्मिन् संदर्भे रामकृष्णस्य शिष्यवात्सल्यं विवेकानन्दस्य गुरुभक्तिश्च दरीदृश्यते। रामकृष्णः तदानीमेव दर्शनपथमागतमपि तं नरेन्द्रं (विवेकानन्दं) चिरकालपरिचितमिव कारणपुरुषमिव भावयामास। नरेन्द्रोऽपि जीवन्मुक्तदशायां स्थितं तं परमहंसं दृष्ट्वा प्रशान्तान्तःकरणः सञ्जातः। एतादृशयोः गुरुशिष्ययोः समागमः लोककल्याणार्थमेव समभूत्।

नागराजन् महोदयस्य गद्यशैली तत्र तत्र परम्परायत्तगद्यशैल्या प्रभाविताऽपि नातिदीर्घ-समासा समकालीनप्रज्ञावती च दृश्यते। उपमाद्यलङ्कारप्रयोगे अस्य कवेः कौशल्यमपि सम्यक् दृश्यते।

१. **विराजते** — वि+राज् धातोः लट् प्र. पु. ए.। **धृत्वा** — धृ धातोः क्त्वान्ताव्ययम्। **त्रिवेणीसङ्गमः** — गङ्गा–यमुना–सरस्वतीनां सङ्गमः। सत्त्वं, रजः, तमः इति त्रयः प्रकृतिजाः गुणाः। **समाहारः** — सङ्गमः।

२. **कृतोद्वाहः** — कृतः उद्वाहः येन सः (उद्वाहः — विवाहः)। **अनासक्तियोगेन** — निस्संगत्वेन। **अधीत्य** — इङ् (अध्ययने) धातोः ल्यबन्ताव्ययम्, इङ् धातुः नित्यं अधिपूर्वः। **अजानात्** — ज्ञा धातोः लङ् प्र. पु. ए.। **नलिनी-पत्रे जलबिन्दुरिव** — नलिनीपत्रे जलबिन्दुः विद्यमानोऽपि अविद्यमानप्रायः। **मताचार्योपदेशितद्वारा** — द्वार् शब्दः तृतीया एकवचनम्। **बुबुधे** — बुध् धातोः लिट् प्र. पु. ए.। **भवतारिणी** — भवस्य (संसारस्य) तारिणी। **प्रससार** — प्र+सृ (सर्) धातोः लिट् प्र. पु. ए।

३. **स्वस्थचित्तः** — स्वस्थं चित्तं यस्य सः (ब. स.)। **अद्राक्षीत्** — दृश् धातोः लुङ् प्र. पु. ए.। **कोलः** — प्लवन–साधनम्। **जातविशेष-शेमुषीविकासः** — जातः विशेषः शेमुषी–विकासः यस्मिन् सः (ब. स.) शेमुषी — बुद्धिः। **अमन्यत** — मन् धातोः लङ् प्र. पु. ए.। **डोलायमानमानसोऽपि** — डोलायमानं मानसं यस्य सः (ब. स.) **द्विगुणितरयेण** — रयः — वेगः।

४. **ददृशिरे** — दृश् धातोः लिट् प्र. पु. ब.। **साध्वसाधिष्ठितं** — साध्वसं — भयम्। **चकाशिरे** — काश् धातोः लिट् प्र. पु. ब.। **धुरि** — अग्रे। **विद्राविता** — दूरीकृता। **निष्कं** — सुवर्णनाणकं।

---

# पद्य-विभागः

## ९. सुग्रीवसख्यम्

[ लोके 'एकं दुःखं च सुखं च नौ' इत्येवंप्रायं सख्यं विरलं भंसाव्यते। यदा तादृशं सख्यं भवति, यथा कर्ण–दुर्योधनयोः कृष्णार्जुनयोः कृष्णसुदामयोः वा, तदा जीवितस्य साफल्यं संपद्यते। राम–सुग्रीवयोः सख्यमपि एतादृशम् एव। तत सख्यं परस्परस्य उपकाराय कल्पते। सीतावियोगदुःखितः श्रीरामः। भ्रात्रा अपहृतपत्नीकः सुग्रीवः तथैव दुःखितः। समान-दुःखयोः तयोः सख्यं परस्परस्य सुखाय लोककल्याणाय च भवति। ]

ततः स सुमहाप्राज्ञो हनूमान् मारुतात्मजः।
जगामादाय तौ वीरौ हरिराजाय राघवौ ॥ १ ॥

भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः।
पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः, ॥ २ ॥

ऋष्यमूकात् तु हनुमान् गत्वा तं मलयं गिरिम्।
आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ ३ ॥

अयं रामो महाप्राज्ञ सम्प्राप्तो दृढविक्रमः।
लक्ष्मणेन सह भ्रात्रा रामोऽयं सत्यविक्रमः ॥ ४ ॥

इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः।
धर्मे निगदितश्चैव पितुर्निर्देशकारकः ॥ ५ ॥

तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः।
रावणेन हृता भार्या स त्वां शरणमागतः ॥ ६ ॥

भवता सत्यकामौ तौ भ्रातरौ रामलक्ष्मणौ।
प्रगृह्य चार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७ ॥

श्रुत्वा हनूमतो वाक्यं सुग्रीवो वानराधिपः ।
दर्शनीयतमो भूत्वा प्रीत्यौवाच च राघवम् ॥ ८ ॥

भवान् धर्मविनीतश्च सुतपाः सर्ववत्सलः ।
आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ ९ ॥

तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो ।
यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ १० ॥

रोचते यदि मे सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥ ११ ॥

एतत् तु वचनं श्रुत्वा सुग्रीवस्य सुभाषितम् ।
सम्प्रहृष्टमना हस्तं पीडयामास पाणिना ॥ १२ ॥

हृष्टः सौहृदमालम्ब्य पर्यष्वजत पीडितम् ।
ततो हनूमान् संत्यज्य भिक्षुरूपमरिंदमः ॥ १३ ॥

काष्ठयोः स्वेन रूपेण जनयामास पावकम् ।
दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ॥ १४ ॥

तयोर्मध्ये तु सुप्रीतो निदधौ सुसमाहितः ।
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥ १५ ॥

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ।
ततः सुप्रीतमनसौ तावुभौ हरिराघवौ ॥ १६ ॥

अन्योन्यमभिवीक्षन्तौ न तृप्तिमभिजग्मतुः ।
त्वं वयस्योऽसि हृद्यो मे ह्येकं दुःखं सुखं च नौ ॥ १७ ॥

प्रत्युवाच तदा रामं हर्षव्याकुललोचनः ।
अहं विनिकृतो राम चरामीह भयार्दितः ॥ १८ ॥

हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः ।
सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः ॥ १९ ॥

वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ।
वालिनो मे महाभाग भयार्तस्याभयं कुरु ॥ २० ॥

कर्तुमर्हसि काकुत्स्थ भयं मे न भवेद् यथा ।
एवमुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ॥ २१ ॥

प्रत्यभाषत काकुत्स्थः सुग्रीवं प्रहसन्निव ।
उपकारफलं मित्रं विदितं मे महाकपे ॥ २२ ॥

वालिनं तं वधिष्यामि तव भार्यापहारिणम् ।
अमोघाः सूर्यसङ्काशा ममेमे निशिताः शराः ॥ २३ ॥

शरैर्विनिहतं भूमौ प्रकीर्णमिव पर्वतम् ।
स तु तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् ।
सुग्रीवः परमप्रीतः परमं वाक्यमब्रवीत् ॥ २४ ॥

तव प्रसादेन नृसिंह वीर
प्रियां च राज्यं च समाप्नुयामहम् ।
तथा कुरु त्वं नरदेव वैरिणं
यथा न हिंस्यात् स पुनर्ममाग्रजम् ॥ २५ ॥

## टिप्पणी

प्रस्तुतः पद्यभागः रामायणस्य किष्किन्धाकाण्डात् सङ्गृहीतः । श्रीमद्रामायणम् आदिकाव्यमिति प्रसिद्धम् । आदिकविः वाल्मीकिः तस्य कर्ता । सः रामायणकथा-नायकस्य श्रीरामस्य समकालीनः आसीत् इति रामायणादेव ज्ञायते । तस्य कालविषये निर्णयः कर्तुम् अशक्यः, रामकालस्य इतिहासपूर्वविषयत्वात ।

रामायणस्य उत्पत्तिविषये काचन कथा बालकाण्डस्य आदिभागे विद्यते । एकदा बाल्मीकिः स्नानार्थं तमसानदीम् अगच्छत् । तत्र तेन नद्याः अपरे तीरे वृक्षशाखायां क्रीडन्ती क्रौञ्चपक्षिणौ दृष्टौ । तस्मिन्नेव क्षणे व्याधेन विद्धः क्रौञ्चः भूमौ निपपात । रुधिर-क्लिन्नगात्रं तं दृष्ट्वा क्रौञ्ची सकरुणं चुक्रोश । एतत् अवलोकयतः वाल्मीकेः मुखात् इयं शापोक्तिः श्लोकरूपेण निर्गता —

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

अयमेवासीत् लौकिकच्छन्दसः प्रथमावतारः । शोकार्तेन मया किमिदं व्याहृतमिति वाल्मीकिः विस्मितो बभूव । तदा ब्रह्मा प्रत्यक्षो भूत्वा तस्मिन् नवे छन्दसि रामकथां विरचयितुं तम् आदिदेश । वाल्मीकिः तदादेशेन रामायणं व्यरचयत् । एवमभूत् रामायणस्य जन्म ।

रामायणे बालकाण्डः अयोध्याकाण्डः अरण्यकाण्डः किष्किन्धाकाण्डः सुन्दरकाण्डः युद्धकाण्डः उत्तरकाण्डश्चेति सप्त विभागाः सन्ति । तत्र किष्किन्धाकाण्डः राम-सुग्रीवयोः सख्यप्रसङ्गात् आरभ्यते । अस्य सख्यस्य सन्दर्भस्तु अरण्यकाण्डात् अनुस्यूतः । रावणः हिरण्य-मृगकैतवेन रामलक्ष्मणौ वञ्चयित्वा सीताम् अपाहरत् । रामलक्ष्मणौ सीतान्वेषणार्थम् अरण्ये चरन्तौ किष्किन्धायाम् ऋष्यमूकपर्वतं प्रापतुः । तत्र तौ वेषान्तरेण चरतः हनूमतः दृष्टिपथम् आगतौ । तयोः वृत्तान्तं श्रुत्वा हनूमान् तौ सुग्रीवसमीपम् अनयत् । ततः राम–सुग्रीवयोः परस्परं सख्यं सञ्जातम् । इदमस्य पाठस्य वस्तु ।

अस्मिन् प्रसङ्गे रामसुग्रीवयोः सौहार्दं कविना सम्यक् उपवर्णितम् । परस्परस्य वृत्तान्तं श्रुत्वा तयोः हृदये स्नेहभावः जागृतः बभूव । 'आवयोः स्नेहः निरवधिको भवतु' इति आशंसन्तौ तौ वयस्यत्वम् उपागतौ । तदा तौ अन्योन्यम् अभिवीक्षन्तौ न तृप्तिम् अभिजग्मतुः । हृद्ये तस्मिन् वयस्यभावे 'आवयोः सुखं च दुःखं च एकमेव' इति तौ परस्परं सान्त्वयामासतुः ।

वाल्मीकिकवेः भाषा सरला मधुरा च । रामवर्णने तु तस्य भाषासम्पत् अधिका सम्पद्यते । तत्र महाप्राज्ञत्वादिविशेषणानि अहमहमिकया समापतन्ति । अयत्नसिद्धाः अनुप्रासोपामाद्यलङ्काराः तस्य भाषाम् अलंकुर्वन्ति ।

१. **सुमहाप्राज्ञः** —सुमहान् च असौ प्राज्ञश्च । **मारुतात्मजः** — मारुतस्य आत्मजः (ष. स.), हनूमान् । **जगाम** — गम् धातोः लिट्. प्र. पु. ए. । **हरिराजाय** — हरीणां राजा हरिराजः, तस्मै, नकारान्तः राजन् शब्दः समासान्ते अकारान्तः भवति; हरिः – कपिः । **राघवौ** — रघोः गोत्रापत्ये पुमांसौ [ प्र. वि. — राघवः राघवौ राघवाः ]।

२. **परित्यज्य** — परि + त्यज् + ल्यप्; उपसर्गपूर्वकत्वे धातोः ल्यप् एव भवति, त्वा न भवति । **कपिकुञ्जरः** — कपिः कुञ्जरः इव । **भिक्षुरूपं** — वालेः भयात् सुग्रीवादिकपयः भिक्षुरूपेण सञ्चरन्ति स्म ।

३. **आचचक्षे** — आ + चक्ष् धातोः लिट्, प्र. पु. ए. ।

४. **लक्ष्मणेन सह** — सहयोगे तृतीया ।

५. **इक्ष्वाकूणाम्** — सूर्यवंशे प्रसिद्धः राजा इक्ष्वाकुः, तद्वंशीयाः इक्ष्वाकवः, तेषाम्; रघुवंशस्य इक्ष्वाकुवंशः इति अपरं नामधेयम् । **निगदितः** — नि + गद् क्त (त) ।

६. **निदेशः** — आज्ञा ।

७. **सत्यकामौ** — सत्ये कामः ययोः तौ (ब. स.) । **प्रगृह्य** — प्र + ग्रह् + ल्यप् । **अर्चयस्व** — अर्च् धातोः लोट्, म. पु. ए ।

८. **उवाच** — वच् धातोः लिट्, प्र. पु. ए. ।

९. **धर्मविनीतः** —धर्मेण विनीतः (तृ. स.) **सुतपाः**–प्र. वि. ए; सुष्ठु तपः यस्य सः (ब. स.)।

१०. **सौहार्दम्** — सुहृदः भावः ।

११. **मर्यादा बध्यतां ध्रुवा** — मर्यादा — अवधिः; आवयोः सख्यस्य अवधिः चिरन्तना भवतु इति भावः ।

१२. **संप्रहृष्टमनाः** — प्र. वि. ए., संप्रहृष्टं मनः यस्य सः, संप्रहृष्ट — सम् + प्र + हृष् + क्त ।

१३. **पर्यव्रजत** — परि + व्रज् धातोः लङ्, प्र. पु. ए. ।

१४. **पावकः** — वह्निः ।

१५. **निदधौ** — नि + धा धातोः लिट्, प्र. पु. ए. **चक्रतुः** — कृधातोः लिट् प्र. पु. द्वि.

१७. **अभिवीक्षन्तौ** — अभि + वि + ईक्ष् धातोः वर्तमानकृदन्तः, प्र. वि. द्वि. । **अभिजग्मतुः** — अभि + गम् धातोः लिट्, प्र पु. द्वि. ।

१८. **हर्षव्याकुललोचनः** — हर्षेण व्याकुले लोचने यस्य सः; व्याकुले — चलिते । **विनिकृतः** — अपमानितः ।

१९. **उद्भ्रान्तचेतनः** — उद्भ्रान्तं चेतनं यस्य सः ।

२१. **काकुत्स्थ** — ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः, तस्य संबोधनम् । ककुत्स्थः रघुवंशीयः प्रसिद्धः राजा । **भवेत्** — भूधातोः विधिलिङ्, प्र. पु. ए. । **धर्मज्ञः** — धर्मं जानाति इति ।

२२. **प्रत्यभाषत** — प्रति + भाष् धातोः लङ्, प्र. पु. ए. । **प्रहसन्निव** — प्र + हस् धातोः वर्तमानकृदन्तः, प्र. वि ए., प्रहसन् इव, सस्मितः इत्यर्थः । **उपकारफलम्** — उपकारः एव फलं यस्मिन् तत् ।

२३. **सूर्यसंकाशाः** — सूर्यसदृशाः ।

२४. **अब्रवीत्** — ब्रूधातोः लङ् प्र. पु. ए ।

२५. **नृसिंह** — नृषु सिंहः, तस्य संबोधनम् । **समाप्नुयाम्** — सम् + आप्धातोः विधिलिङ्, उ. पु. ए. । **हिंस्यात्** — हन्धातोः विधिलिङ्, प्र. पु. ए. ।

---

# १०. अभिमन्योः प्रतिज्ञा

[ पराक्रमः वयः न अवलम्बते । शिशुरपि सिंहशावकः गजं दृष्ट्वा पराक्रमते । संस्कृत–साहित्ये अनेके वीरबालकाः शौर्येण कीर्तिमन्तः सञ्जाताः । रामायणे लव-कुशौ चन्द्रकेतुश्च तादृशाः । सर्वस्मादपि अधिक–कीर्तिमान् बालः तावत् महाभारतस्य वीराभिमन्युः । सः पाण्डववीरस्य अर्जुनस्य पुत्रः । यादवाग्रणेः कृष्णस्य स्वस्रीयः । कुरुक्षेत्रयुद्धे द्रोणाचार्येण निर्मितस्य चक्रव्यूहस्य भेदने तस्य पराक्रमः विजृम्भते । तस्मिन्नवसरे अभिमन्युना कृता प्रतिज्ञा सत्त्ववतामपि वैरिणां हृदयं कम्पयति । ]

सञ्जय उवाच–

चक्रव्यूहो महाराज आचार्येणाभिकल्पितः ।<br>
तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः ॥ १ ॥

ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।<br>
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥ २ ॥

तदनीकमनाधृष्यं भारद्वाजेन रक्षितम् ।<br>
पार्थाः समभ्यवर्तन्त भीमसेन–पुरोगमाः ॥ ३ ॥

पीड्यमानाः शरै राजन् द्रोणचाप–विनिस्सृतैः ।<br>
न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः ॥ ४ ॥

तदद्भुतमपश्याम द्रोणस्य भुजयोर्बलम् ।<br>
यदेनं नाभ्यवर्तन्त पञ्चालाः सृञ्जयैः सह ॥ ५ ॥

तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः ।<br>
बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ॥ ६ ॥

अशक्यं तु तमन्येन द्रोणं मत्वा युधिष्ठिरः ।<br>
अविषह्यं गुरुं भारं सौभद्रं समवासृजत् ॥ ७ ॥

वासुदेवादनवरं फाल्गुनाच्चामितौजसम् ।<br>
अब्रवीत् परवीरघ्नमभिमन्युमिदं वचः ॥ ८ ॥

युधिष्ठिर उवाच–

एत्य नो नार्जुनो गर्हेद् यथा तात तथा कुरु ।
चक्रव्यूहस्य न वयं विद्मो भेदं कथंचन ॥ ९ ॥

त्वं वार्जुनो वा कृष्णो वा भिन्द्यात् प्रद्युम्न एव वा ।
चक्रव्यूहं महाबाहो पञ्चमो नोपपद्यते ॥ १० ॥

अभिमन्यो वरं तात याचतां दातुमर्हसि ।
पितॄणां मातुलानां च सैन्यानां चैव सर्वशः ॥ ११ ॥

धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात्
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ १२ ॥

अभिमन्युरुवाच–

द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि ।
पितॄणां जयमाकाङ्क्षन्नवगाहेऽविलम्बितम् ॥ १३ ॥

उपदिष्टो हि मे पित्रा योगोऽनीकविशातने ।
नोत्सहे हि विनिर्गन्तुमहं कस्यांचिदापदि ॥ १४ ॥

युधिष्ठिर उवाच–

भिन्ध्यनीकं युधां श्रेष्ठ द्वारं संजनयस्व नः ।
वयं त्वानुगमिष्यामो येन त्वं तात यास्यसि ॥ १५ ॥

धनञ्जयसमं युध्दे त्वां वयं तात संयुगे ।
प्रणिधायानुयास्यामो रक्षन्तः सर्वतोमुखाः ॥ १६ ॥

भीम उवाच–

अहं त्वानुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः ।
पञ्चालाः केकया मत्स्यास्तथा सर्वे प्रभद्रकाः ॥ १७ ॥

सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः ।
वयं प्रध्वंसयिष्यामो निघ्नमाना वरान् वरान् ॥ १८ ॥

अभिमन्युरुवाच–

अहमेतत् प्रवेक्ष्यामि द्रोणानीकं दुरासदम् ।
पतङ्ग इव संक्रुद्धो ज्वलितं जातवेदसम् ॥ १९ ॥

तत् कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः ।
मातुलस्य च यत्प्रीतिं करिष्यति पितुश्च मे ॥ २० ॥

शिशुनैकेन सङ्ग्रामे काल्यमानानि संघशः ।
द्रक्ष्यन्ति सर्वभूतानि द्विषत्सैन्यानि वै मया ॥ २१ ॥

नाहं पार्थेन जातः स्यां न च जातः सुभद्रया ।
यदि मे संयुगे कश्चिज्जीवितो नाद्य मुच्यते ॥ २२ ॥

यदि चैकरथेनाहं समग्रं क्षत्रमण्डलम् ।
न करोम्यष्टधा युद्धे न भवाम्यर्जुनात्मजः ॥ २३ ॥

युधिष्ठिर उवाच—
एवं ते भाषमाणस्य बलं सौभद्र वर्धताम् ।
यत् समुत्सहसे भेत्तुं द्रोणानीकं दुरासदम् ॥ २४ ॥

रक्षितं पुरुषव्याघ्रैर्महेष्वासैर्महाबलैः ।
साध्यरुद्रमरुत्तुल्यैर्वस्वग्न्यादित्यविक्रमैः ॥ २५ ॥

सञ्जय उवाच—
तस्य तद् वचनं श्रुत्वा स यन्तारमचोदयत् ।
सुमित्राश्वान् रणे क्षिप्रं द्रोणानीकाय चोदय ॥ २६ ॥

## टिप्पणी

अयं पद्यभागः महाभारतस्य द्रोणपर्वणि विद्यमानात् अभिमन्युवधपर्वनाम्नः उपपर्वणः उद्धृतः । महाभारतं नाम महान् ग्रन्थः संस्कृतसाहित्ये इतिहास इति प्रसिद्धः । तस्य कर्ता प्रथितयशाः वेदव्यासः । जयं भारतं महाभारतं चेति तस्य तिस्रः आवृत्तयः आसन् इति आधुनिकविदुषां मतम् । अष्टशतोत्तर–अष्टसहस्र—श्लोकेभ्यः (८८००) लक्षश्लोक (१,००,०००) पर्यन्तं महाभारतस्य विकासः अभवत् इति ज्ञायते । क्रि. श. चतुर्थ (४) शतकात् पूर्वमेव महाभारतम् अन्तिमं गात्रं प्राप इति विदुषां मतम् । अस्मिन्नष्टादशपर्वात्मके ग्रन्थे कुरुक्षेत्रयुद्धस्य तत्सम्बद्धानां कौरवपाण्डववीराणां चरितस्य च वर्णनं मुख्यं वस्तु । एतद् वस्तु बहुविधैः उपाख्यानैः क्षेत्रेतिहासैश्च ओतं प्रोतं च वर्तते । धर्मः अर्थः कामः मोक्षश्चेति चतुर्विधानां पुरुषार्थानां सविस्तरं प्रतिपादनमपि कृतम् । अत एव अस्य पीठिकायां एवम् उच्यते—

"धर्मे अर्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ।। "

इति । तस्मात् अयं ग्रन्थः धर्मशास्त्रमिति, पञ्चमवेद इति च प्रसिद्धः ।

प्रस्तुते पद्यभागे अभिमन्योः प्रतापः विशदीकृतः । तस्य सन्दर्भस्तु एवं ज्ञातव्यः । कुरुक्षेत्रयुद्धे सेनाधिपत्यं प्रथमं भीष्मस्य, तदनन्तरञ्च द्रोणस्य सम्पद्यते । तस्मिन्नवसरे अर्जुनः कृष्णेन सह संशप्तकान् प्रति योद्धुं गतः आसीत् । तदा द्रोणः चक्रव्यूहं अरचयत् । 'अर्जुनं विना न कोऽपि अस्मासु चक्रव्यूहभेदने समर्थः' इति युधिष्ठिरः चिन्तामग्नः बभूव । तदा अभिमन्युः चक्रव्यूहभेदनविद्यां जानाति इति ज्ञात्वा युधिष्ठिरः तमेव प्रेषयितुं निर्णयं चकार । सः तमाहूय स्वनिर्णयम् अवदत् । तदा अभिमन्युः तमेव स्वप्रतापावसरं मत्वा ज्येष्ठ-पितृव्यस्य आदेशं अङ्गीकृत्य प्रतिज्ञां चकार ।

१. **चक्रव्यूहः** — द्रोणेन रचितः कौरवसैन्यविन्यासः । **अभिकल्पितः** — अभि + क्लृप् + क्त (त) प्रत्यय । **शक्रोपमाः** — शक्रेण सदृशाः (राजानः)

२. **प्रववृते** — प्र + वृत् धातोः लिट् प्र. पु. ए. । **लोमहर्षणं** — रोमाञ्चकरम् । **तावकानां** — तव इमे तावकाः तेषां (कौरवाणाम्)

३. **अनीकं** — सैन्यम् । **अनाधृष्यं** — अभिभवस्य अयोग्यम् । **भारद्वाजेन** — द्रोणेन । **समभ्यवर्तत** — सम् + अभि + वृत् धातोः लङ प्र. पु. ब. ।

४. **राजन्** — धृतराष्ट्रमुद्दिश्य संबोधनम् । **द्रोणचापविनिःसृतैः** — द्रोणस्य चापः, तस्मात् **विनिःसृतैः** — वि + नि + सृ + त (प्रत्यय) । **शेकुः** — शक् धातोः लिट् प्र. पु. ब. ।

५. **अपश्याम** — दृश् धातोः लङ उ. पु. ब. । **पञ्चालाः** — पञ्चाल-देशस्य राजानः । **सृञ्जयाः** — तन्नामक-राजानः । न **अभ्यवर्तन्त** — पुरतः न अतिष्ठन् ।

६. **बहुधा** — बहुप्रकारेण (अव्ययम्) । **प्रतिवारणं** — प्रतिरोधम् ।

७. **अविषह्यं** — दुःसहम् । **सौभद्रं** — सुभद्रायाः अपत्यं पुमान्, सौभद्रः तम् । **समवासृजत्** — सम् + अव + सृज् धातोः लङ प्र. पु. ए., आह्वयत् ।

८. **अनवरं** — अन्यूनम् । **अमितौजसं** — अमितं ओजः यस्य सः (ब. स.) अमितौजाः, तम् । **परवीरघ्नं** — परवीरान् हन्ति इति परवीरघ्नः, तम् ।

९. **एत्य** — आगत्य । **नः** — अस्मान् । न **गर्हेत्** — न निन्देत्, यथा अर्जुनः अस्मान् न निन्देत् तथा कुरु; विजयी भवेत्यर्थः ।

१०. **उपपद्यते** — उप + पद् धातोः लट् प्र. पु. ए. ।

११. **याचतां** — याच् धातोः शतृप्रत्ययान्तः शब्दः, ष. वि. ब. । **तात** — इति कनीयसां संबोधने ।

१२. **विशातय** — वि+शो धातोः णिजन्त लोट् म. पु. ए.; नाशय। **संयुगात्** — युद्धात्।

१३. **अवगाहे** — प्रविशामि, अव+गाह् धातोः लट् उ. पु ए.। **अविलम्बितं** — आशु।

१४. **विशातने** — भेदने। **योगः** — उपायः। **विनिर्गन्तुं** — प्रत्यागन्तुम्।

१५. **भिन्धि** — भिद् धातोः लोट् म. पु. ए.। **युधां** — युध् शब्दस्य षष्ठी बहुवचन। **सञ्जनयस्व** — सम् + जन् धातोः लोट् म. पु, ए.। **त्वा** — त्वाम्। **येन** — येन द्वारेण।

१६. **प्रणिधाय** — प्र + नि + धा धातोः ल्यबन्ताव्ययम्।

१८. **सकृत्** — एकदा।

१९. **प्रवेक्ष्यामि** — प्र+विश् धातोः लृट् उ. पु ए.। **दुरासदं** — प्राप्तुम् अशक्यम्। **पतङ्ग इव** — शलभः (कीटविशेषः) इव। **जातवेदसं** — जातवेदाः अग्निः तम्।

२०. **वंशयोर्द्वयोः** — मातृवंशस्य पितृवंशस्य च। **मातुलस्य** — मातुः भ्राता मातुलः, तस्य।

२१. **काल्यमानानि** — संह्रियमाणानि। **द्रक्ष्यन्ति** — दृश् धातोः लृट् प्र. पु. ब.। **संघशः** — एकैकं समूहं कृत्वा। **द्विषत्सैन्यानि** — शत्रुसैन्यानि (द्वितीया बहुवचनम्)

२२. **अयं उत्तरश्च श्लोकः प्रतिज्ञारूपः।**

२३. **अष्टधा करोमि** — शत्रुसैन्यं अष्टदिक्षु पलाययामि।

२४. **वर्धतां** — वृध् धातोः लोट् प्र. पु. ए.।

२५. साध्याः रुद्राः मरुतः इति विजातीयदेवताः। वसवोऽपि तथा। **महेष्वासैः** — महाधनुष्कः।

२६. **अबोधयत्** — बुद् धातोः लङ प्र. पु. ए.। **यन्तारं** — सारथिम्।

———

# ११. रत्नं समागच्छति काञ्चनेन।

[ लोके परस्परम् अनुरूपयोः वधूवरयोः समागमः विरलः। यदा तादृशः विवाहः सम्पत्स्यते तदा जनाः प्रशंसन्ति 'रत्नं समागच्छति काञ्चनेन' इति। एतादृशः एव विवाहः अस्य पद्यभागस्य वस्तु। अत्र इन्दुमती नाम्नी वधूः स्वयंवरे अजं वरयते। इन्दुमती तावत् विदर्भराजस्य भोजस्य सहोदरी रूपगुणसम्पन्ना। अजोऽपि सूर्यवंशीयस्य रघुमहाराजस्य पुत्रः रूपे शौर्ये च कीर्तिमान्। तादृशयोः विवाहः रत्नकाञ्चनयोः संयोग इव परस्परशोभायै भवति। अयं पद्यभागः रघुवंशमहाकाव्यस्य षष्ठसर्गात् उद्धृतः। ]

संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ १ ॥

तस्यां रघोः सूनुरुपस्थितायां
वृणीत मां नेति समाकुलोऽभूत्।
वामेतरः संशयमस्य बाहुः
केयूरबन्धोच्छ्वसितैर्नुनोद ॥ २ ॥

तं प्राप्य सर्वावयवानवद्यं
व्यावर्ततान्योपगमात्कुमारी।
न हि प्रफुल्लं सहकारमेत्य
वृक्षान्तरं काङ्क्षति षट्पदाली ॥ ३ ॥

तस्मिन्समावेशितचित्तवृत्ति-
मिन्दुप्रभामिन्दुमतीमवेक्ष्य।
प्रचक्रमे वक्तुमनुक्रमज्ञा
सविस्तरं वाक्यमिदं सुनन्दा ॥ ४ ॥

इक्ष्वाकुवंश्यः ककुदं नृपाणां
ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः
श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥ ५ ॥

महेन्द्रमास्थाय महोक्षरूपं
यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥ ६ ॥

ऐरावतास्फालनविश्लथं यः
संघट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्या-
मर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ७ ॥

जातः कुले तस्य किलोरुकीर्तिः
कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे
शक्राभ्यसूयाविनिवृत्तये यः ॥ ८ ॥

यस्मिन्महीं शासति वाणिनीनां
निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्त्रंसयदंशुकानि
को लम्बयेदाहरणाय हस्तम् ॥ ९ ॥

पुत्रो रघुस्तस्य पदं प्रशास्ति
महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसंभृतां यो
मृत्पात्रशेषामकरोद्विभूतिम् ॥ १० ॥

आरूढमद्रीनुदधीन्वितीर्णं
भुजङ्गमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि
यशः परिच्छेत्तुमियत्तयालम् ॥ ११ ॥

असौ कुमारस्तमजोऽनुजात-
स्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा
धुर्येण दम्यः सदृशं बिभर्ति ॥ १२ ॥

कुलेन कान्त्या वयसा नवेन
गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मतस्तुल्यममुं वृणीष्व
रत्नं समागच्छतु काञ्चनेन ॥ १३ ॥

ततः सुनन्दावचनावसाने
लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्टचा प्रसादामलया कुमारं
प्रत्यग्रहीत्संवरणस्रजेव ॥ १४ ॥

सा यूनि तस्मिन्नभिलाषबन्धं
शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं
भित्त्वा निराक्रामदरालकेश्याः ॥ १५ ॥

तथागतायां परिहासपूर्वं
सख्यां सखी वेत्रभृदाबभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां
वधूरसूयाकुटिलं ददर्श ॥ १६ ॥

सा चूर्णगौरं रघुनन्दनस्य
धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं
कण्ठे गुणं मूर्तमिवानुरागम् ॥ १७ ॥

तया स्रजा मङ्गलपुष्पमय्या
विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां
विदर्भराजावरजां वरेण्यः ॥ १८ ॥

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ १९ ॥

## टिप्पणी

अयं पद्यभागः कालिदासस्य रघुवंशात् उद्धृतः । कालिदासः संस्कृतसाहित्ये प्रसिद्धः महाकविः । तस्य देशकालादिविषये न अल्पमपि निःसंदिग्धं ज्ञायते । भोजप्रबन्धादिषु कालिदासविषयाः कथाः वर्तन्ते । तासां इतिहासत्वे प्रामाण्यं नास्ति । कालिदासस्य कालविषये विद्वत्सु ऐकमत्यं नास्ति । तेनैव रचितस्य मालविकाग्निमित्रनाटकस्य नायकः अग्निमित्रः ऐतिहासिकः पुरुषः आसीत् । सः क्रिस्तात् पूर्वं द्वितीयशतके राज्यं चकार इति ज्ञायते । तस्मात् क्रिस्तात् पूर्वं १५० तमो वर्षः कालिदासकालस्य पूर्वसीमा भवितुमर्हति । ऐहोले–शिलाशासने कालिदासस्य नामोल्लेखः कृतः — 'स विजयतां रविकीर्तिः कविताश्रित–कालिदास–भारविकीर्तिः' इति । क्रिस्तादनन्तरं ६३४ तमः वर्षः अस्य शासनस्य कालः । अतः कालिदासकालस्य अयमेव उत्तरसीमा भवितुमर्हति । एतयोः परिमितिम् अनतिक्रम्य कालिदासस्य कालः परिशीलनीयः । तत्र द्वे एव मते उल्लेखनीये भवतः । क्रिस्तात् पूर्वं प्रथमं शतकं कालिदासस्य कालः इत्येकं मतम् । क्रिस्तादनन्तरं पञ्चमं शतकं तस्य कालः इत्यन्यत् । आद्यमतानुसारेण क्रि. पू. ५७ वर्षे विक्रमशकस्य प्रवर्तकः विक्रमादित्यः उज्जयिन्यां राज्यं परिपालयामास । तस्य आस्थाने कालिदासः आसीत् । एवं मन्यमानाः केचन विद्वांसः क्रिस्तात् पूर्वं प्रथमे शतके सः आसीत् इति अभिप्रयन्ति । द्वितीयमतं तु गुप्तराजेषु द्वितीयचन्द्रगुप्तस्यापि विक्रमादित्य इति नाम प्रथितं आसीत् । तस्य आस्थाने कालिदासः अवसत् इति एवं-वादिनः विद्वांसः क्रि. श. पञ्चमं शतकं तस्य कालः इति अङ्गीकुर्वन्ति ।

देशविषये तावत् कालिदासः उज्जयिन्यां तत्परिसरप्रदेशे वा अवसत् इति बहवः विद्वांसः मन्यन्ते । जीवितविषयेऽपि न किञ्चित् सुनिश्चितं ज्ञातम् । तथापि तस्य कृतीनां अवलोकनेन एवं संभावयितुं शक्यते, यथा— सः व्याकरणादिशास्त्रेषु निष्णातः आसीत् । दर्शनेषु विशेषेण वेदान्ते तस्य अतीव परिणतिः आसीत् । शिवः तस्य इष्टदेवता । तथापि धर्मविषये तस्य विचारः विशालः आसीत् ।

कालिदासस्य कृतयः सप्त इति गणिताः । रघुवंशम्, कुमारसम्भवम् इति द्वे महाकाव्ये; मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम् च इति त्रीणि नाटकानि; ऋतुसंहारम् मेघदूतम् इति द्वे खण्डकाव्ये च तस्य कृतयः ।

प्रस्तुते पद्यभागे इन्दुमतीस्वयंवरस्य विषयः संगृहीतः। तत्र स्वयंवरे नानादेशेभ्यः आगताः राजकुमारा संमिलिताः सन्ति। इन्दुमती कस्य कण्ठे वरणमालिकां अर्पयति इति प्रतीक्षा सर्वेषां मनसि वर्तते। इन्दुमत्याः सखी नाम्ना सुनन्दा एकैकं राजकुमारं इन्दुमत्यै परिचाययति। इन्दुमती तूष्णीं एकैकस्य आङ्गिकविकारान् परिभावयन्ती तामनुसरति। अन्ते सुनन्दा अजं प्रति तां नीत्वा तस्य अन्वयप्रतिष्ठां रूपगुणादिकं च वर्णयति। तदा अजः गाम्भीर्येण समुपविष्टः इन्दुमत्याः हृदयम् अपहरति। इन्दुमती तस्य कण्ठे वरणमालिकः समर्पयति।

वैदर्भी रीतिः सकलगुणविशिष्टा रमणीया च काचित् काव्यशैली। तस्यां कालिदासः विशिष्यते। 'वैदर्भी स्वयं वृतवती श्रीकालिदासं वरम्' इति सूक्तिरपि प्रसिद्धा। माधुर्यादयां गुणाः कालिदासस्य रचनासु अयत्नसिद्धाः विजृम्भन्ते। पदविन्यासे अर्थविन्यासे च सौकुमार्यं स्वयमेव स्फुटं भवति। रसभावपरवशः कालिदासः अलङ्कारान् रस–भावपोषणायैव प्रयुङ्क्ते। प्रयत्नेन विनैव अलङ्काराः तस्य वाण्यां समुल्लसिताः भवन्ति। 'उपमा कालिदासस्य' इत्युक्तिरपि प्रसिद्धा वर्तते। कालिदासः उपमा— प्रयोगे विशिष्यते इति तदुक्तेः तात्पर्यम्। तासां अतीव सामञ्जस्यं विमर्शकानां हृदयम् आह्लादयति। यद्यपि उपमायां कालिदासः विशिष्यते तथापि अन्येषां उत्प्रेक्षा, अर्थान्तरन्यासः, दृष्टान्तः, निदर्शना' इत्याद्यलङ्काराणां प्रयोगेऽपि तस्य प्रतिभा गणनीया वर्तते।

१. **पतिंवरा** — विवाहयोग्या कन्या (इन्दुमती) **दीपशिखेव** — दीपस्य ज्वाला इव। **व्यतीयाय** — अतीत्य गता, वि+अति+इ धातोः लिट् प्र पु. ए.। **नरेन्द्रमार्गाट्टः** — राजपथे विद्यमानः गृहविशेषः। **विवर्णभावं** — नैराश्येन जायमानः मुखे वर्णव्यत्यासः। **प्रपेदे** — पाप्तवान्, प्र+पद् धातोः लिट् प्र. पु. ए,।

दीपः यदा मुखसमीपे आगच्छति तदा मुखं कान्तिः दृश्यते। दीपापगमे पुनः मुखात् कान्तिरपि अपगच्छति। तथा यदा इन्दुमती राज्ञां समीपे आगता तदा तेषां मुखे आशाभावेन कान्तिः उत्पन्ना। यदा सा तान् अतिक्रम्य पुरतो जगाम तदा तेषां मुखे विवर्णभावः संजातः। अस्य उपमानस्य निसर्गसिद्धत्वात् रमणीयत्वाच्च कविः दीपशिखा-कालिदास इति प्रसिद्धः।

२. **तस्यां उपस्थितायां** — तस्यां समीपमागतायां सत्यां (सति सप्तमी) वृणीत — वृ धातोः विधिलिङ् प्र.पु.ए.। **समाकुलः** — संशयितः। **वामेतरः** — वामात् इतरः, दक्षिणः। **केयूरबन्धोच्छ्वसितैः** — केयूरं बध्यते अत्र इति केयूरबन्धः तस्य उच्छ्वसितैः, **केयूरं** — आभरणविशेषः (अङ्गदम्), **उच्छ्वसितं** — स्फुरणम्। **नुनोद** — अपाहरत् – नुद् धातोः लिट् प्र. पु. ए.।

३. **सर्वावयवानवद्यम्** — सर्वाङ्गसुन्दरम्, अनवद्यं–अदोषम्। **व्यावर्तत** — निवृत्ता, वि+आ+वृत् धातोः लङ् प्र. पु. ए.। **षट्पदाली** — भ्रमरसमूहः। **सहकारः** — आम्र–

वृक्षः । न हि सर्वोत्कृष्टवस्तुलाभे सति वस्त्वन्तरस्याभिलाषः कस्यापि संजायते । अत्र दृष्टान्तालङ्कारः ।

४. **तस्मिन्** — अजे । **समावेशितचित्तवृत्तिं** — समावेशिता चित्तवृत्तिः यया ताम् (ब. स.) निबद्धमानसाम् । **इन्दुप्रभां** — इन्दोः प्रभा इव प्रभा यस्याः ताम् (ब. स.) । **प्रचक्रमे** — (प्रारभत), प्र + क्रम् धातोः लिट् प्र. पु. ए. ।

५. इतः प्रभृति नवभिः श्लोकैः अजवर्णनं कृतम् । **इक्ष्वाकुवंश्यः** — इक्ष्वाकुवंशे भवः । **ककुदं** — श्रेष्ठः । **आहितलक्षणः** — प्रख्यातगुणः । **दधति** — धा धातोः लट् प्र. पु. ब. ।

६. **संयति** — युद्धे । **महोक्षरूपं** — महावृषभरूपम् । **आस्थाय** — आरुह्य, आ + स्था + ल्यप् । **प्राप्तपिनाकिलीलः** — प्राप्ता पिनाकिनः (परमेश्वरस्य) लीला येन सः (ब. स.) । **प्रोषितपत्रलेखाः** — प्रोषिता (परित्यक्ता) पत्रलेखा (पत्राकार–चित्ररचना) याभिः ताः, ताः (द्वि. वि. ब.) सभर्तृकानां वनितानां एव कपोलयोः पत्राकाररचनारूपः अलङ्कारः विहितः । विधवानां तु निषिद्धः । अजः शत्रून् निहत्य तेषां पत्नीनां वैधव्यं कारयामास ।

७. **ऐरावतास्फालनविश्लथं** — ऐरावतस्य आस्फालनेन विश्लथम्, आस्फालनं — ताडनम्, विश्लथं — शिथिलम् । **अङ्गदं** — केयूरम् । **संघट्टयन्** — संघर्षयन् । **अग्र्यां** — श्रेष्ठाम् । **उपेयुषः** — प्राप्तस्य, उपेयिवस् शब्दस्य षष्ठी एकवचने रूपम् । **गोत्रभिदः** — इन्द्रस्य । **अधितष्ठौ** — अधि + स्था धातोः लिट् प्र. पु. ए, अधि–उपसर्गे इकार–सद्भावात् तस्थौ इत्यत्र सकारस्य षकारः ततः ष्टुत्वम् ।

७. **उरुकीर्तिः** — महायशाः । **शक्राभ्यसूयाविनिवृत्तये** — इन्द्रस्य असूयानिवारणाय न तु असामर्थ्यात् । **एकोनशतक्रतुत्वे** — शतसंख्यैः क्रतुभिः इन्द्रपदवी प्राप्यते । इन्द्रप्रीतये शततमं क्रतुं त्यक्तवान् ।

९. **विहारार्धपथे** — विहरति अत्र इति विहारः (क्रीडास्थानम्), अर्धश्चासौ पन्थाश्च अर्धपथः, विहारस्य अर्धपथः — तस्मिन् । पथिन् शब्दः समासान्ते अकारान्तो भवति । **वारुणीनां** — मद्यपानेन मत्तानाम् । **अंशुकानि** — वस्त्राणि । **अस्रंसयत्** — स्रंस् धातोः लङ् प्र. पु. ए. । **लम्बयेत्** — लम्ब् धातोः विधिलिङ् प्र. पु. ए.

१०. **पदम्** — स्थानम् । **चतुर्दिगावर्जितसंभृतां** — चतसृभ्यः दिग्भ्यः आवर्जिता संभृता च, ताम्, **आवर्जिता** — सम्पादिता, **संभृता** — वर्धिता । **विभूतिं** — सम्पदम् । विश्वजित्–यागे सर्वस्वं दक्षिणारूपेण दीयते ।

११. **आरूढं** — आ + रुह् + क्त । **भुजङ्गमानां वसतिं** — पाताललोकम्, **भुजङ्गमः** — सर्पः । रघुमहाराजस्य कीर्तिः देशतः कालतो वा परिमातुं न शक्या ।

१२. **त्रिविष्टपस्य** — स्वर्गस्य । **दम्य:** — दमयितुं योग्य:, **बिर्भात** — भृधातो: लट् प्र. पु. ए.

१३. **विनयप्रधानै:** — विनय: प्रधान: येषां, तै: । अजस्य सर्वेष गुणेषु विनय: प्रधान आसीत् । **रत्नं काञ्चनेन समागच्छतु** — रत्नकाञ्चनयो: इव इन्दुमत्यजयो: समागम: भवतु । **वृणीष्व** — वृ धातो: लोट् म. पु. ए. ।

१४. **तनूकृत्य** — संकोच्य । **प्रत्यग्रहीत्** — प्रति + ग्रह् धातो: लङ् प्र. पु. ए., स्वीकृतवती । इन्दुमती अनुरागपूर्वकं अजम् अपश्यत् इति भाव: ।

१५. **अभिलाषबन्धं** — अनुरागस्य ग्रन्थिम् । **शशाक** — शक् धातो: लिट् प्र. पु. ए. । **शालीनतया** — मुग्धभावेन । **रोमाञ्चलक्ष्येण** — पुलकस्य व्याजेन । **निराक्रामत्** — निर् + आ + क्रम् धातो: लङ् प्र. पु. ए. सा केवलं रोमाञ्चेन अनुरागं प्रकाशितवती ।

१६. **वेत्रभृत्** —वेत्रस्य भृत्, दण्ड — धारिणी (सुनन्दा), **आबभाषे** — आ + भाष् धातो: लिट् प्र. पु. ए. । **असूयाकुटिलं** — असूयया कुटिलं (वक्रम्) यथा भवति तथा ।

१७. **करभोपमोरू:** — करभ: उपमा ययो: तौ करभोपमौ, करभोपमौ ऊरू यस्या: सा, । **करभ:** — मणिबन्धादारभ्य कनिष्ठिकापर्यन्तं विद्यमान: हस्तप्रदेश:, तद्वत् उरो: मार्दवं विद्यते । **चूर्णगौरं** — चूर्णेन गौरम् (तृ. त. स.) अत्र कुङ्कुमरूपमङ्गलद्रव्यं चूर्णम्, तेन गौरं लोहितम् । अनुरागस्य रक्तवर्णत्वं कविसमय: । **आसञ्जयामास** — आ + षञ्ज् धातो: लिट् प्र. पु. ए. ।

१८. **वरेण्य:** — उत्कृष्ट: । **अवरजा** — सहोदरी, **अमंस्त** — मन् धातो: लुङ् प्र. पु. ए. । अज: स्वकण्ठे लम्बमानां तां स्रजं इन्दुमत्या: बाहुपाश इति अमन्यत, इति भाव: ।

१९. **समगुणयोगप्रीतय :** — समा: गुणा: ययो: तौ समगुणौ, तयो: योगेन प्रीति: येषां ते । अजस्य इन्दुमत्याश्च समागम: अनुरूप: अभवत् इति सूचयितुं चन्द्रमस: चन्द्रिकायाश्च समागम:, सागरस्य गङ्गायाश्च समागम:, उपमानत्वेन दत्त: । मालोपमा ।

---

# १२. भस्मावशेषं मदनं चकार

[ विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा: ' इति कालिदासेन सम्यक् उक्तम् । विकार–हेतुषु विद्यमानेष्वपि येषां मनांसि विकृतानि न भवन्ति ते एव धीरा: । शिव: तादृश: धीर: । स: आत्मनि आत्मानमेव योगदृष्ट्या पश्यन् समाधिमग्न: आसीत् । तदा देवराजेन इन्द्रेण देवकार्यार्थं प्रेषित: काम: तत्तपोवनं उपवनं कर्तुं प्रायतत । तदर्थं आदौ स्वसखं वसन्तं प्रेषयामास । अकालिकेन वसन्तागमनेन सर्वं प्राणिजातं कामविकारेण आविष्टं बभूव । तेषां मध्ये शिवस्तु समाधिस्थ: स्थाणुरिव अचल: आसीत् । तादृशस्यापि समाधिभङ्गं कर्तुं प्रयतमान: मदन: भस्मावशेषो बभूव । मदन: देवकार्यार्थं स्वात्मानं समार्पयत् ]

स देवदारुद्रुमवेदिकायां
शार्दूलचर्मव्यवधानवत्यां
आसीनमासन्न–शरीरपात–
स्त्रियम्बकं संयमिनं ददर्श ॥ १ ॥

स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्त:
स्रस्तं शरं चापमपि स्वहस्तात् ॥ २ ॥

निर्वाणभूयिष्ठमथास्य वीर्यं
संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्या-
मदृश्यत स्थावरराजकन्या ॥ ३ ॥

तां वीक्ष्य सर्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचाप:
स्वकार्यसिद्धिं पुनराशशंसे ॥ ४ ॥

भविष्यतः पत्युरुमा च शंभोः
समाससाद प्रतिहार–भूमिम् ।
योगात्स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ ५ ॥

ततो भुजङ्गाधिपतेः फणाग्रैः
अधः कथंचिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः
पर्यङ्कबन्धं निबिडं बिभेद ॥ ६ ॥

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ७ ॥

तस्याः सखीभ्यां प्रणिपातपूर्वं
स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ८ ॥

उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन
मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ९ ॥

अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन ।
नहीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥ १० ॥

कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ॥ ११ ॥

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैः
मन्दाकिनीपुष्करबीजमालाम् ॥ १२ ॥

प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ १३ ॥

हरस्तु किञ्चित्परिलुप्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ १४ ॥

विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्यस्तविलोचनेन ॥ १५ ॥

अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ १६ ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं
प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ १७ ॥

तपःपरामर्शविवृद्धमन्यो-
र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य
स्फुरन्नुदर्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल निष्पपात ॥ १८ ॥

क्रोधं प्रभो संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ १९ ॥

## टिप्पणी

अयं पद्यभागः कालिदासविरचितस्य कुमार–सम्भवस्य तृतीयसर्गात् सङ्गृहीतः । कालिदासस्य कालदेशादिविचारः 'रत्नं समागच्छति काञ्चनेन' इति पाठस्य टिप्पण्यां निरूपितः । सः अत्रापि अनुसन्धेयः । प्रकृते तु अस्य पद्यभागस्य विषयः प्रस्तूयते ।

कुमार–सम्भवे तृतीयः सर्गः अतीव रम्यः । तत्र मदनसखेन वसन्तेन व्याप्तं तपोवनं सम्यक् उपवर्णितम् । मदनस्य आगमनं तु देवकार्यार्थमिति अस्य पाठस्य पीठिकायां सूचितम् । किं तत् कार्यमिति चेत् उच्यते । तारको नाम असुरः ब्रह्मणा दत्तेन वरेण गर्वितः लोकान् पीडयामास । तेन सन्तापिताः देवाः इन्द्रेण सह ब्रह्माणं प्रार्थयामासुः । ब्रह्मा च तेभ्यः तारकवधस्य उपायं उपदिदेश । शिवपार्वत्योः तनयः एव तस्य हन्ता इति नियमः अस्ति । अतः तेनैव तत्कार्यं भवेत् इति अवोचत् । शिवस्तु दक्षयज्ञे सतीदहनानन्तरं विरक्तो भूत्वा समाधिमग्नः आसीत् । सती तु पार्वतीरूपेण जाता आसीत् । कथं तयोः समागमः उपकल्पनीयः इति देवानां चिन्ता अभवत् । अत्रान्तरे तपोवने पार्वती शिवस्य सेवायां निरता इति ज्ञात्वा देवाः कार्योन्मुखाः बभूवुः । इन्द्रः शिवस्य तपोभङ्गार्थं मदनं प्रेषयामास । तदा मदनः पत्न्या रत्या मित्रेण च सह शिवस्य तपोभूमिम् आगतः । वसन्तस्य व्यापनेन तपोवनं सर्वं नवमिव सञ्जातम् । पशुपक्षिणः सर्वे कामविकारेण इतस्ततः भ्रमणं चक्रुः । शिवस्तु निर्विकारचित्तः समाधौ मग्नः आसीत् । तं दृष्ट्वा मदनस्य मनसि स्वसामर्थ्य–विषये संशयः सञ्जातः । तदानीं सञ्चारिणी पल्लविता लतेव आगच्छन्ती पार्वती तेन दृष्टा । तस्याः दर्शनेन तस्य हृदये पुनरपि धैर्यम् अजायत । स पुष्पबाणं धनुषि नियुज्य अवसरं प्रतीक्षमाणः स्थितः । पार्वती पुष्करबीजमालिकां शिवस्य कण्ठे सानुरागम् अर्पयितुम् यदा उद्युक्ता तस्मिन्नेव क्षणे मदनः पुष्पशरं शिवे मुमोच । तत्प्रहारेण शिवः किञ्चिदिव चलितः अभवत् । क्षिप्रमेव निगृहीतचित्तः भूत्वा विकार–हेतुम् अन्वेष्टुं दिक्षु दृष्टिं प्रेरयामास । यदा मदने तस्य दृष्टिः पपात तदा सहसा कोपज्वाला तृतीयनेत्रात् निर्गत्य मदनं भस्मावशेषं चकार ।

१. **देवदारुद्रुमवेदिकायाम्** — देवदारुद्रुमनिर्मितायां वेदिकायाम् । **शार्दूलचर्मव्यवधानवत्याम्** — शार्दूलस्य चर्म, शार्दूलचर्मणा व्यवधानं, शार्दूलचर्मव्यवधानम् अस्याः अस्तीति शार्दूलचर्मव्यवधानवती, तस्याम्; शार्दूलः–व्याघ्रः, व्यवधानवती–आच्छादनवती ।

**आसन्नशरीरपात:** — शरीरस्य पात: शरीरपात:, आसन्न: शरीरपात: यस्य स:; शरीरपात:- मृत्यु: । **त्रियम्बकम्** — त्रीणि अम्बकानि यस्य स: । त्र्यम्बक इत्येव साधु, पादपूरणार्थं त्रियम्बकमिति रूपं कविना प्रयुक्तम् । महाकविप्रयोगात् अभियुक्तै: अङ्गीकृतम् ।

२. **अयुग्मनेत्रम्** — त्रिलोचनम् । **अधृष्यम्** — न धृष्यम्, अजेयम् । **साध्वस-सन्नहस्त:** — साध्वसेन सन्न: हस्त: यस्य स: भयेन हस्त: शिथिलीकृत: । **अलक्षयत्** — लक्ष्धातो: लङ् प्र, पु. ए. ।

३. **निर्वाणभूयिष्ठम्** — निर्वाणेन भूयिष्ठम्, निर्वाणेन — नाशेन, नष्टप्रायम् । **सन्धुक्षयन्ती** — अभिवर्धयन्ती । **अदृश्यत** — दृश्धातो: कर्मणि लङ् प्र पु. ए. । **स्थावर-राजकन्या** — स्थावरराज: हिमवान्, तस्य पुत्री (हैमवती) । 'सन्धुक्षयन्ती इव' इत्यत्र इवशब्द: उत्प्रेक्षाव्यञ्जक: ।

४, **रतेरपि ह्रीपदम् आदधानाम्** — रतेरपि लज्जाम् उत्पादयन्तीम् । **ह्रीपदम्** — लज्जानिमित्तम् । **पुष्पचाप:** — मदन: । **आशशंस** — आ+शंस्धातो: लिट् प्र. पु. ए. । स्वकर्मसिद्धि: अवश्यं भवतीति भावयामास ।

५. **समाससाद** — सम् + आ + सद्धातो: लिट् प्र. पु. ए. । **प्रतिहारभूमिम्** — द्वारदेशम् । **उपारराम** — उप + आ + रम्धातो: लिट् प्र. पु. ए. । अत्र 'आ उपसर्गपूर्वकत्वात् रम्धातो: परस्मैपदित्वम् ।

६. **भुजङ्गाधिपते:** — शेषस्य । **कृतप्राणविमुक्ति:** — कृता प्राणानां विमुक्ति: येन स:, समाधिकाले क्रियमाणं प्राणायामं परित्यक्तवान । **बिभेद** — भिद्धातो: लिट् प्र.पु.ए. **धृतभूमिभागम्** — इदं क्रियाविशेषणम्; यदा शिव: बन्धं शिथिलीकृत्य आसनादुत्थित: तदा भूमि: किञ्चिदिव चलिता । अत: शेष: फणाग्रै: महता प्रयासेन भूमिं बभार इति भाव: ।

७. **शुश्रूषया उपेताम्** — सेवानिमित्तेन आगताम् । **भ्रूक्षेपमात्रानुमतप्रवेशाम्** — भ्रुवो: क्षेप: भ्रुक्षेप:, केवलं भ्रूक्षेप: भ्रूक्षेपमात्रम्, तेन अनुमत: प्रवेश: यस्या: ताम् । शिव, तस्यै भ्रूचालनमात्रेण प्रवेशाय अनुमतिं दत्तवान् ।

८. **पल्लवभङ्गभिन्न:** — पल्लवानां शकलै: मिश्रित:, अत्र भिन्नशब्दस्य मिश्रित: इत्यर्थ: ज्ञेय: । **शिशिरात्ययस्य** — शिशिरसमाप्तौ आगतस्य (वसन्तस्य) **व्यकीर्यत** — वि + कृ (किर्) धातो: कर्मणि लङ् प्र, पु, ए,

९. **कर्णच्युतपल्लवेन** — कर्णात् च्युत: पल्लव: यस्य तेन (मूर्ध्ना) । **वृषभध्वजाय**-शिवाय । **नवकर्णिकारम्** — पुष्पविशेषम् । **लोलालकमध्यशोभि** — कुन्तलमध्ये शोभमानम्; कर्णिकारविशेषणम् ।

१०. **अनन्यभाजं** — अन्यां भजतीति अन्यभाक्, न अन्यभाक् अनन्यभाक् तम्। **भवेन** — शिवेन। **व्याहृतयः**–वचनानि।

११. **बाणावसरम्** — बाणप्रयोगस्य कालम्। **विविक्षुः** — प्रवेष्टुम् इच्छुः। **आममर्श** — आ + मृश् धातोः लिट् प्र. पु. ए., स्पृष्टवान्। 'पतङ्गवद् वह्निमुखं विविक्षुः' इत्युपमाऽलंकारः।

१२. **उपनिन्ये** — उप + निधातोः लिट् प्र. पु. ए., समर्पितवती। **भानुमतः** — भानुमान् सूर्यः, तस्य। **मन्दाकिनीपुष्करबीजमालाम्** — मन्दाकिन्याः पुष्कराणि (पद्मानि), तेषां बीजानि, तेषां मालाम्। कमलबीजैः विरचितां मालाम् इत्यर्थः।

१३. **उपचक्रमे** — उप + क्रम्धातोः लिट् प्र. पु. ए.। **पुष्पधन्वा** — पुष्पं धनुः यस्य सः (कामः)। **सम्मोहनम्** — पञ्चबाणेषु अन्यतमस्य नाम। **समधत्त** — सम् + धाधातोः लङ प्र. पु, ए.।

१४. **चन्द्रोदयारम्भे अम्बुराशिः इव** — समुद्रः चन्द्रोदयारम्भ गाम्भीर्यं परित्यज यथा उच्चलति तथा रुद्रोऽपि निश्चलत्वं परित्यक्तवान्; उपमाऽलङ्कारः।

१५. **भावम्** — प्रेम (अनुरागः)। **साचीकृता** — तिर्यक् कृता।

१६. **वशित्वात्** — जितेन्द्रियत्वात्। **ससर्ज** — सृज्धातोः लिट् प्र. पु. ए.

१७. **दक्षिणापाङ्गनिविष्टमुष्टिम्** — दक्षिणापाङ्गे निविष्टा मुष्टिः यस्य सः। अपाङ्गः–नेत्रान्तः। **नतांसः** — नतः अंसः यस्य सः, तम्, अंसः–भुजः। **आकुञ्चितसव्य-जानुम्** — आकुञ्चितं (ईषत् नतं) सव्यं (वामं) जानु (ऊरुपर्व) यस्य सः, तम्। **चक्रीकृत-चारुचापम्** — चारुः (मनोहरः) चापः चारुचापः, चक्रीकृतः चारुचापः येन सः, तम्। बाणप्रयोगसन्नद्धस्य मदनस्य भङ्गी अत्र कविना सम्यक् वर्णिता। **आत्मयोनिम्** — मनोभवम (मदनम्)।

१८. **तपःपरामर्शविवृद्धमन्योः** — तपसः परामर्शेन विवृद्धः मन्युः यस्य तस्य। **परामर्शः** — भङ्गः। **उदर्चिः** — उद्गतम् अर्चिः यस्य सः। **कृशानुः** — अग्निः। **निष्पपात** — निस् + पत् धातोः लिट् प्र. पु. ए.।

१९. **भस्मावशेषम्** — भस्म एव अवशेषः यस्य तम्।

---

# १३. गङ्गास्तवः

[ संस्कृते स्तोत्रसाहित्यं विशिष्टं स्थानम् आक्रामति । ऋग्वेदकालादारभ्य आधुनिककालपर्यन्तं स्तोत्रसाहित्यस्य समुल्लासः दरीदृश्यते । शङ्कर–रामानुज-मध्वादयः आचार्याः मयूर-बाणादयः प्राचीनकवयश्च स्तोत्रसाहित्यं स्वकृतिभिः पोषयामासुः । नीलकण्ठ–जगन्नाथादयः अर्वाचीनकवयोऽपि स्तोत्राणि रचयामासुः । स्तोत्रसाहित्ये भक्तिरेव प्राधान्यं भजते । भक्तिपरवशानां कवीनां स्तोत्राणि काव्यसौन्दर्येण शोभन्ते । स्तोत्राणां तादृशीं शोभां प्रदर्शयितुं जगन्नाथकवेः गङ्गालहरीतः संगृहीतः 'गङ्गास्तवः' अत्र प्रस्तूयते ]

समृद्धं सौभाग्यं सकलवसुधायाः किमपि त-
न्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु ॥ १ ॥

तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं भजसि यदि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ॥ २ ॥

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि तीरं श्रितवताम् ।
सुधातः स्वादीयस्सलिलभरमातृप्ति पिबताम्
जनानामानन्दः परिहसति निर्वाणपदवीम् ॥ ३ ॥

महादानैर्ध्यानैर्बहुविधवितानैरपि च य-
न्न लभ्यं घोराभिः सुविमलतपोराशिभिरपि ।
अचिन्त्यं तद्विष्णोः पदमखिलसाधारणतया
ददाना केनासि त्वमिह तुलनीया कथय नः ॥ ४ ॥

स्खलन्ती स्वर्लोकादवनितल–शोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥ ५ ॥

स्वभावस्वच्छानां सहजशिशिराणामयमपा-
मपारस्ते मातर्जयति महिमा कोऽपि जगति ।
मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः
समासाद्याद्यापि स्फुटपुलकसान्द्राः सगरजाः ॥ ६ ॥

कृतक्षुद्रैनस्कानथ झटिति सन्तप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता-
न्नरान्दूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ ७ ॥

अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन्विश्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम् ।
सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं
शिशुः संप्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥ ८ ॥

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं हि न्यक्कारो जननि मनुजस्य श्रवणयो-
र्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥ ९ ॥

कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः
परे पूतात्मानः कति च परलोकप्रणयिनः ।
सुखं शेते मातस्तव खलु कृपातः पुनरयं
जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ॥ १० ॥

## टिप्पणी

अयं पद्यभागः जगन्नाथकवेः गङ्गालहर्याः संगृहीतः। जगन्नाथः क्रि. श. १७ तमे शतके आसीत्। आन्ध्र-प्रदेशस्य गोदावरीमण्डले मुंगुन्दनामा ग्रामः तस्य जन्मस्थानम्। लक्ष्मी: पेरुभट्टश्च तस्य मातापितरौ। तेन व्याकरणादिषु सर्वशास्त्रेषु प्रावीण्यं प्राप्तम्। सः षाह्-जहान् नाम्नः मोघल्राजस्य ( क्रि. श. १६२८–१६३८ ) आस्थाने न्यवसत्। तत्र सः महता पाण्डित्येन प्रतिभासमुल्लासेन च 'पण्डितराजः' इति बिरुदं प्राप। व्याकरणम्, अलङ्कारशास्त्रम्, इत्यादिक्षेत्रेषु ग्रन्थान् विरचयामास। अनेकाः काव्यकृतयश्च तेन प्रणीताः। अलङ्कारक्षेत्रे रसगङ्गाधरः, चित्रमीमांसाखण्डनं चेति द्वौ तस्य ग्रन्थौ। तस्य काव्यकृतयः — भामिनीविलासः, असफविलासः, जगदाभरणम्, अमृतलहरी, लक्ष्मीलहरी, करुणालहरी, सुधालहरी, गङ्गालहरी चेति।

जगन्नाथस्य विषये काचन कथा श्रूयते — "राजास्थाने सः कस्याश्चन मसल्मान-कन्यायाम् अनुरक्तः अभूत्। तया सह विवाहोऽपि निर्वृत्तः। ततः जातेः बहिष्कृतः अन्ते सः पश्चात्तापेन दग्धहृदयः गङ्गानदीतीरम् आगमत्। तत्र सोपानभूमौ निषण्णः सः गङ्गां भक्तिपूर्वकं श्लोकैः प्रशंसयामास। यथा यथा सः एकैकं श्लोकं परिसमाप्तवान् तथा तथा गङ्गाप्रवाहोऽपि एकैकं सोपानम् आरुह्य अन्ततः तमपि अमज्जयत्" इति।

गङ्गालहर्यां तस्य भक्तिः भगवद्विषये तस्य औत्कण्ठ्यं च सुव्यक्तम्। उद्धृतेषु दशश्लोकेषु तस्य हताशभावः तत्प्रवृत्ता च अशुभशमनेच्छा दरीदृश्यते। एवमयं गङ्गास्तवः दश्चात्तापदग्धहृदयस्य कवेः भावं सम्यक् व्यनक्ति। जगन्नाथस्य काव्यशैली तु अतीव मधुरा प्रौढा च। अत्र अनुप्रासादिशब्दालङ्कारवैभवं अर्थगाम्भीर्यं भावपरिपुष्टिश्च सहृदयानां हृदयम् अपहरन्ति।

१. **लीलाजनितजगतः** — लीलया जनितं जगत् येन सः, तस्य। **खण्डपरशोः** — खण्डपरशुः शिवः, तस्य। सुमनसाम् — देवानाम्। **सुधासौन्दर्यम्** — सुधायाः अमृतस्य सौन्दर्यमिव सौन्दर्यं यस्य तत्। अत्र गङ्गायाः सलिलम् एव भुवः सौभाग्यं, शिवस्य ऐश्वर्यं श्रुतीनां सर्वस्वं, देवानां पुण्यं चेति बहुविधं वर्ण्यते। उल्लेखालङ्कारः।

२. **स्फुरदलघुगर्वेण** — न लघुः अलघुः, स्फुरन् अलघुः गर्वः, तेन; अद्भुतेन अतीव गर्वेण इत्यर्थः। **अवज्ञासरणिम्** — तिरस्कारपदवीम्। **औदास्यम्** — उदासस्य भावः, अनासक्तिः। **निराधारः** — आधार-रहितः, आश्रयरहितः।

३. **प्राज्यम्** — प्रभूतं, विस्तृतम्। **विलोलद्वानीरम्** — विलोलन् वानीरः यस्मिन् तत् विलोलद्वानीरम् तत्। **वानीरः** — वेतसः (वञ्जुलः)। **सुधातः स्वादीयः** — अमृतादपि अधिकं स्वादु। **आतृप्ति** — क्रियाविशेषणम्। परिहसति – तिरस्कारभावेन इति

यावत् । वैराग्येण गङ्गायाः तीरं श्रितवतां, तस्याः स्वादु सलिलं पिबतां जनानाम् आनन्दः मोक्षसुखमपि अतिरिच्यते इति भावः ।

४. **वितानैः** — यज्ञैः । यत् दानैः, ध्यानैः, यज्ञैः तपोभिश्च न लभ्यं तत् विष्णोः परमं पदं सुलभतया ददती गङ्गा न केनापि तुलनीया ।

५. **पुरभिदा** — शिवेन । तस्याः गुणानां लोभेनैव शिवः तां जटाग्रन्थौ बद्धवान् इति तेषां दोषत्वम् ।

६. **मुदा** — मुद्शब्दस्य तृ. वि. ए., आनन्देन । **यशः** — महिमानम् । **द्युतलं समासाद्य** — स्वर्गं प्राप्य । **अनवद्यद्युतिभृतः** — न अवद्या अनवद्या, अनवद्यां द्युतिं बिभ्रति इति (सगरजाः) । **पुलकः** — रोमाञ्चः । **सगरजाः** — सगरस्य पुत्राः, षष्टिसहस्रं (60,000) सगरपुत्राः कपिलर्षेः कोपेन भस्मीकृताः पौत्रेण भागीरथेन आनीतया स्वर्गङ्गया पूताः स्वर्गं गताः इति रामायणे बालकाण्डे कथा वर्तते । अयं महिमा गङ्गासलिलस्य ।

७. **कृतक्षुद्रैनस्कान्** — कृतं क्षुद्रं एनः यैः ते कृतक्षुद्रैनस्काः, तान् । **क्षुद्रम्** — अल्पम्, **एनः** — पापम् । **झटिति** — सपदि । **प्रायश्चित्तप्रसरणपथातीतचरितान्** — प्रायश्चित्तस्य प्रसरणं, तस्य पन्थाः प्रायश्चित्त-प्रसरणपथः, तस्मात् अतीतं चरितं येषां ते, तान् । तेषां चरितं न कदापि अनुतापवशं भवितुं शक्यते इत्यर्थः । **त्वमिव त्वम्** — अनन्वयालङ्कारः ।

८. **विगलितगतिः** — विगलिता गतिः (च्युतः आधारः) यस्य सः । **पतन्** — पतनशीलः सन् । **गदविगलितः** — गदेन विगलितः (रोगेण अभिभूतः, व्याप्तः) । **विदध्याः** कुर्याः; वि + धाधातोः विधिलिङ म. पु. ए । अत्र सर्वार्पणभावः प्रतीयते ।

९. **आलीढा** — आ + लिह + क्त + स्त्री प्रत्ययः; दृष्टा इत्यर्थः । **न्यक्कारः** — धिक्कारः । **श्रवणयोः** — कर्णयोः । **लहरिलीलाकलकलः** — लहरीणां (वीचीनां) लीलाः, ताभिः कलकलः (मञ्जुलनिनादः) ।

१०. **लोकार्थघटकाः** — ऐहिकविषयासक्ताः । अत्रापि शरणागतिः सम्यक् निरूपिता

---

# १४. सुभाषितानि

[ " संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ।
सुभाषितरसास्वादः सङ्गतिः सुजनैः सह ॥

इति सुष्ठूक्तम् ।" सुभाषितेषु ज्ञानस्य लोकानुभवस्य च परिपाकः विद्यते । तस्माद् एतेषां अध्ययनम् अवश्यं कर्तव्यम् । विषयाः निबद्धाः । तस्मात् तानि अध्येतॄणां हृदयं वशीकृत्य कान्तासंमिततया उपदिशन्ति । ]

सुभाषितप्रशंसा:

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तस्यां हि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ १ ॥

नायं प्रयाति विकृतिं विरसो न यः स्या-
न्न क्षीयते बहुजनैर्नितरां निपीतः ।
जाड्यं निहन्ति रुचिमेति करोति तृप्तिं
नूनं सुभाषितरसोऽन्यरसातिशायी ॥ २ ॥

धन्याः शुचीनि सुरभीणि गुणोम्भितानि
वाग्वीरुधः स्ववदनोपवनोद्गतायाः ।
उच्चित्य सूक्तिकुसुमानि सतां विविक्त-
वर्णानि कर्णपुलिनेष्ववतंसयन्ति ॥ ३ ॥

किं हारैः किमु कङ्कणैः किमु सुमैः कर्णावतंसैरलं
केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः ।
पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं
यन्निष्पीडितपार्वणामृतकरस्यन्दोपमाः सूक्तयः ॥ ४ ॥

खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा
श्रुत्वान्येभ्यः सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति ।
अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्
कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः सङ्ग्रहः ॥ ५ ॥

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते ।
भेत्तुं वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति ।।
माधुर्यं मधु-बिन्दुना रचयितुं क्षाराम्बुधेरीहते ।
मूर्खान्यः प्रतिनेतुमिच्छति बलात्सूक्तैः सुधास्यन्दिभिः ।। ६ ।।

यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवं ।
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं ।
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ।। ७ ।।

।। मूर्खपद्धतिः ।।

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनाम् ।
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ।।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि
व्रीडा चेत्किमु भूषणैस्सुकविता यद्यस्ति राज्येन किम् ।। ८ ।।

जाड्यं धियो हरति सिञ्चति वाचि सत्यं ।
मानोन्नतिं दिशति पापमपाकरोति ।।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं ।
सत्सङ्गतिः कथय किं न करोति पुंसाम् ।। ९ ।।

।। विद्वत्पद्धतिः ।।

मणिश्शाणोल्लीढस्समरविजयी हेति-दलितो
मदक्षीणो नागश्शरदि सरिदाश्यानपुलिना ।
कलाशेषश्चन्द्रस्सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः ।। १० ।।

यद्धात्रा निजफालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोधिकं ।।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः ।
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ।। ११ ।।

।। अर्थपद्धतिः ।।

प्राणाघातान्निवृत्तिः परधनहरणे संयमस्सत्यवाक्यं ।
काले शक्त्या प्रदानं युवति–जन–कथामूकभावः परेषां ॥
तृष्णा–स्रोतो–विभङ्गो गुरुषु च विनयस्सर्व–भूतानुकम्पा ।
सामान्यं सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ १२ ॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रम–विधिः ।
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ॥
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः ।
सतां केनोद्दिष्टं विषममसिधारा–व्रतमिदम् ॥ १३ ॥

॥ सुजनपद्धतिः ॥

एते सत्पुरुषा परार्थघटकास्स्वार्थान् परित्यज्य ये ।
सामान्यास्तु परार्थमुद्यमभृतस्स्वार्थाविरोधेन ये ॥
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ।
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ १४ ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः ।
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ॥
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं ।
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ १५ ॥

॥ परोपकारपद्धतिः ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः ।
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः ॥
विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः ।
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ १६ ॥

॥ धैर्यपद्धतिः ॥

गज–भुजङ्ग–विहङ्गम–बन्धनं
शशि–दिवाकरयोर्ग्रहपीडनम् ।
मतिमतां च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ १७ ॥

॥ दैवपद्धतिः ॥

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १८ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रून् जयत्वाहवे ।
वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षतु ॥
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं ।
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ १९ ॥

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नालिकेरा नराणाम् ।
ददति जलमनल्पास्वादमाजीवितान्तं ।
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ २०॥

॥ कृतज्ञता ॥

काष्ठादग्निर्जायते मथ्यमानात्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फ़लन्ति - ॥ २१ ॥

शिक्षा क्षयं गच्छति कालपर्ययात्
सुबद्धमूला निपतन्ति पादपाः ।
जलं जलस्थानगतं च शुष्यति
हुतं च दत्तं च तथैव तिष्ठति ॥ २२ ॥

॥ भासः ॥

सहसा विदधीत न क्रियाम्
अविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणम्
गुणलुब्धाः स्वयमेव सम्पदः ॥ २३ ॥

॥ भारविः ॥

श्लिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥ २४ ॥

॥ कालिदासः ॥

## टिप्पणी

सुभाषितानि संस्कृतसाहित्ये विशिष्टं स्थानम् अलंकुर्वन्ति । प्रायः संस्कृतसाहित्य एव सुभाषितानि विशिष्टां साहित्यप्रकारतां भजन्ते । संस्कृते विवेकं सम्यक्–चारित्रं च उपदिश्यमानानि सुभाषितानि बहूनि सन्ति । रामायणम्, महाभारतम्, राजनीतिग्रन्थाः, पञ्चतन्त्रम, हितोपदेशः इत्यादिग्रन्थेषु एतादृशानि सुभाषितानि व्यस्तानि सङ्कलितानि वा दृश्यन्ते । अनेकैः कविभिः रचितानि मुक्तकरूपाणि सुभाषितान्यपि सन्ति । काव्यनाटकादिष्वपि सुभाषितानि तत्र तत्र विद्यन्ते । सदुक्तिकर्णामृतम्, शार्ङ्गधरपद्धतिः, सुभाषितावली, सूक्तिमुक्तावली, सुभाषित–रत्नभाण्डागारः इत्यादिषु सङ्कलनेषु विविधमूलादुद्धृतानि सुभाषितानि सन्ति । सुभाषितक्षेत्रे भर्तृहरेः नीतिशतकम् विशिष्यते । तस्मिन् मनुष्यस्वभावस्य विश्लेषः सम्यक्कृतः । मूर्खः, विद्वान्, सुजनः, दुर्जनः, मानम्, धैर्यम् इत्यादि–विषयान् अधिकृत्य सुभाषितानि रचितानि । अस्मिन् पाठे भर्तृहरि–नीतिशतकस्य मूर्खपद्धतिः, विद्वत्पद्धतिः सुजनपद्धतिः इत्यादि भागेभ्यः उद्धृत्य केचन श्लोकाः सङ्गृहीताः । केचन श्लोकाः कालिदासादीनां नाटकेभ्यः उद्धृताः ।

१. **भारती** — भाषा । **सुभाषितम्** — सुष्ठु भाषितम् । काव्यादपि सुभाषितं मधुरतरम् ।

२. **क्षीयते** — क्षि धातोः लट्. प्र. पु. ए. । **निपीतः** — निःशेषं पीतः । **जाड्यं** — जडस्य भावः । **अन्यरसातिशायी** — सर्वरसेभ्यः सुभाषितरसः अतिशयेन वर्तते ।

३. **वाग्वीरुधः** — वाच एव वीरुधः (लताः) । **स्ववदनोपवनोद्गतायाः** — स्वस्य वदनं–स्ववदनं एव उपवनम् तस्मात् उद्गताः, तस्याः । **उच्चित्य** — उत् + चित् + ल्यप् । **कर्णपुलिनेषु** — कर्णपटलेषु ।

४. **मन्यामहे** — मन् धातोः लट् उ. पु. व. । **मण्डनम्** — अलङ्कारः । **निष्पीडितपार्वणामृतकरस्यन्दोपमाः** — नितरां पीडितः, पर्वणि – (पूर्णिमायां) भवः — पार्वणः, अमृतकरः — चन्द्रः । तस्य स्यन्दः — स्यन्दनम्, तेन सदृशाः । चन्द्रस्यन्दनमिव सूक्तयः आनन्दयन्तीत्यर्थः ।

५. **सुभाषितम्** पुनः पुनः श्रोतुं योग्यमेव । **अज्ञान्** — न ज्ञाः अज्ञाः तान्; अज्ञान वशीकरोति च ।

६. **व्यालं** — गजं (सर्पं इति अन्यः अर्थः)। **बालमृणालतन्तुभिः** — बालानि मृणालानि तानि एव तन्तवः तैः (कमलनालैः) **रोद्धुं** — रुधिर् धातोः तुमन्प्रत्ययः; (बद्धुं)। **शिरीषकुसुमं** — पुष्पविशेषः। **क्षाराम्बुधेः** — क्षारस्य अम्बुधिः तस्य; लवणसागरस्य । **सुधास्यन्दिभिः** — सुधां स्यन्दन्ते इति सुधास्यन्दिनः, तैः ।

७. **मदान्धः** — मदेन अन्धः। **अवलिप्तम्** — गर्वितम् । **बुधजनसकाशात्** — पण्डित-जनसंसर्गात् । **अवगतं** — ज्ञातम् । **व्यपगतः** — वि+अप+गतः – कृदंत पु. प्र. वि. ए. ।

८. **क्षान्तिः** — क्षमा । **ज्ञातिः** — बन्धुः। **अनवद्या** — न अवद्या (दोषरहिता)। **व्रीडा** — लज्जा । **सुकविता** — शोभना कविता ।

९. **तनोति** — तन् धातोः लट् प्र. पु. ए. (प्रसरति)। **सत्सङ्गतिः** — सद्भिः सङ्गतिः । **अपाकरोति** — अपकर्षति (उपसर्गेण धात्वर्थः बलादन्यत्र नीयते)

१०. **शाणोल्लीढः** — शाणेन उल्लीढः; शाणः–तीक्ष्णताजनक – यन्त्रविशेषः । **हेतिदलितः** — हेतिः — आयुधम्; तेन दलितः — पीडितः। **मदक्षीणः** — मदेन क्षीणः। **सरित्** — नदी । **आश्यानपुलिना** — अनार्द्रसिकता । **तनिम्ना** — कार्श्येन **गलितविभवाः** — व्ययीकृतसम्पदः – नृपाः इत्यस्य विशेषणम् ।

११. **निजफालपट्टलिखितं** — निजफालम् एव पट्टं – तस्मिन् लिखितं (ललाटलिखिता रेखा इत्यर्थः)। **स्तोकं** — अल्पम् ।

१२. **प्राणाघातात्** — प्राणानां आघातः – तस्मात् । **तृष्णास्रोतः** — तृष्णा एव स्रोतः (प्रवाहः)। अनुपहत–विधिः — न उपहता अनुपहता विधिः यस्मिन् सः ।

१३. **प्रच्छन्नं** — गुप्तं – इदं प्रदानमित्यस्य विशेषणम् । **अनुत्सेकः** — दर्परहितः । **असिधाराव्रतम्** — असेः धारा इव व्रतम् (कठिनव्रतम्)

१४. **परार्थघटकाः** — परोपकारपराः । **स्वार्थाविरोधेन** — स्वार्थस्य अविरोधः तेन । **मानुषराक्षसाः** — मानुषाः राक्षसा इव । **जानीमहे** — ज्ञा धातोः लट् उ. पु. ब. ।

१५. **गुणाः** — माधुर्यादयः । **क्षीरोत्तापम्** — उत्सेकम् । **पयसा** — जलेन । **उन्मनः** — उत्सुकं मनः यस्य तत् । **मित्रापदं** — मित्रस्य–क्षीरस्य–आपत्, ताम् । **शाम्यति** — शम् धातोः लट् प्र. पु. ए. ।

१६. **प्रारभ्यते** — प्र+आ+रभ् धातोः कर्मणि – लट् प्र. पु. ए. । **विघ्नभयेन** — विघ्नात् भयम् – तेन । **प्रतिहन्यमानाः** — प्रति+हन् कर्मणि शानच् – प्रत्ययः वर्तमान कृदन्त प्र. वि. ब. (आहताः) **उत्तमगुणाः** — उत्तमा गुणाः येषां ते ।

१७. **मतिमतां** — मति: एषां अस्ति इति – मतिमन्त: – तेषां। **शशिदिवाकरयो:** — शशी च दिवाकरश्च – तयो:। **ग्रहपीडनम्** — राहुकेत्वो: पीडनम्।

१८. **परिणति:** — परिणाम:। **अवधार्या** — निश्चेय:। **अतिरभसकृतानां** — अतिरभसेन कृतानि तेषाम्। **आविपत्ते:** — विपत्प्राप्तिपर्यन्तम्। **हृदयदाही** — हृदयं दहति इति। **शल्यतुल्य:** — शल्यसमान:। **विपाक:** — परिणाम:।

१९. **मज्जतु** — मज्ज् धातो: लोट् प्र. पु. ए.। **अम्भसि** — नपु. सप्तमी ए.। **मेरुशिखरम्** — मेरो: शिखरम् तत्। **अभाव्यम्** — असम्भाव्यम्। **कर्मवशत:** — पञ्चम्यर्थे तसिल् प्रत्यय:।

२०, **निहित-भारा:** — निहित: भार: येषु ते। **ददति** — दा धातो: लट् प्र.पु.व.। **अनल्पास्वादम्** — न अल्पं आस्वादम्। **आजीवितान्तम्** — मरणपर्यन्तम्।

२१. भासकवे: प्रतिज्ञायौगन्धरायणनाटकादुद्धृतं इदम्। **तोयं** — जलम्। **असाध्यं** — न साध्यं। **मार्गारब्धा:** — मार्गे आरब्धा:।

२२. भासकवे: कर्णभार-नाटकादुद्धृतं इदम्। **कालपर्ययात्** — कालस्य पर्यय: — व्यत्यास: तस्मात्। **सुबद्धमूला:** — सुष्ठु बद्धं मूलं येषां ते। **पादपा:** — पादै: पिबन्ति इति पादपा: — वृक्षा: (मूलात् जलम् आकर्षन्ति वृक्षा:)

२३. किरातार्जुनीय-महाकाव्यादिदं सुभाषितम्। **विदधीत** — वि+दध् विधिलिङ् प्र. पु. ए.। न विदधीत — न कुर्यात्। **सहसा** — अविचार्य।

२४. कालिदासस्य मालविकाग्निमित्रनाटकात् उद्धृतोऽयं श्लोक:। **श्लिष्टा** — सम्यक् सम्बद्धा। **आत्मसंस्था** — आत्मनि संस्था। **सङ्क्रान्ति:** — अन्यं प्रति उपदेश:। **उभयम्** — आत्मनि सम्यक् ज्ञानं, परं प्रति उपदेशश्च। **प्रतिष्ठापयितव्य:** — प्रति+स्था धातो: कर्मणि तव्य-प्रत्ययान्तम्।

———

# १५. कविताद्वयम् – "रम्यता" "ताजमहल्"

[ संस्कृतकाव्यवाहिनी निरन्तरा प्रवहति । अधुनातनकाले विंशशतकेऽपि संस्कृतवाण्याः उपासकाः केचन कविवराः तां रसनिर्भरैः कवितापुष्पैः पूजयन्ति । अतः संस्कृतकाव्यं क्षयम् उपगतम् इति न केनापि आशङ्कनीयम् । भारते तत्र तत्र आधुनिकसंस्कृतकवयः काव्यानि रचयामासुः रचयन्तश्च सन्ति । सि. डि. देशमुखः, वि. राघवः, के. टि. पाण्डुरङ्गी, जग्गु वेङ्कटाचार्यः, जग्गु वकुलभूषणः, जग्गु शिङ्गरार्यः, के. एस्. नागराजः, वेङ्कटरामभट्टः इत्यादयः कविवराः काव्य–नाटक–गद्यप्रबन्धादीनि रचयित्वा संस्कृतवाग्देवीं अलंचक्रुः । तेषां कृतयः तत्तत्कालीनासु उद्यानपत्रिका–मधुरवाणी–संस्कृतप्रतिभाद्यासु संस्कृतपत्रिकासु प्रकटिताः । तासु कृतिषु काश्चन अनुवादरूपाः काश्चन स्वतन्त्ररचनाश्च । एतादृशानां काव्यानां स्वरूपम् विशदीकर्तुं त्रयाणां कवीनां, पाण्डुरङ्गी–वेङ्कटरामभट्ट–शिङ्गरार्याणां कृतयः अत्र पाठ्ये संगृहीताः । प्रथमं तावत् पाण्डुरङ्गी–महोदयस्य कविताद्वयम् उद्धृतम् । ]

## "रम्यता"

असृजत नु विधाता सुन्दरं विश्वमेतत् ?
किमुत कविवचो वा रम्यतोत्प्रेक्षि जातम् ?
अपि सहृदयचेतोरम्यतारोप एषः ?
विघटयतु रहस्यं कोऽपि धन्यो मदन्यः ॥ १ ॥

गगनजलधिरेषः शक्रचापस्स दीर्घः
कुसुमसमय एषो भृङ्गवृन्दं तु नीलम् ।
रमणचरणपातोऽपाङ्गघातस्स एकः
कविसहृदयजुष्टो रम्य एषोऽथ सृष्टः ? ॥ २ ॥

श्रुतिजडमतिरेषस्सृष्टवान् रम्यरूपं
कथमिति कविवर्यः पृष्टवान् कालिदासः ।
दुहितरमथ योऽसौ रम्यरूपां तु वाणीं
कविसहृदयरूपो सृष्टवान् जुष्टवांश्च ॥ ३ ॥

व्यभजत रसदृष्टिं भावसौन्दर्यरम्यां
कविसहृदयमध्ये सर्गकाले विधाता ।
न भवति रससिद्धिर्दुर्विदग्धे निवेद्य
सहृदयपरिभुक्तं नाप्यकाव्यं रसाय ॥ ४ ॥

द्रवति हृदयमेकं व्याधविद्धं विलोक्य
दलति हृदयमन्यद्राघवस्याश्रुपातैः ।
कविसहृदयचेतः पूरमेतं विगाह्य
विशदयतु रसज्ञः स्रोतसो मूलमस्य ॥ ५ ॥

नलिनजनुरथायं शिल्पिनामग्रवर्ती
पुलिनजननमुख्या रम्यवाचः कवीन्द्राः
सहृदयहृदयं तत् शेवधी रम्यतायाः
विघटयति रहस्यं को नु धन्यो मदन्यः ॥ ६ ॥

"ताजमहल्"

राजन्याग्र शहाजहान, भवता राज्यं विसृष्टं परम्
बाष्पं प्रेमसमुद्भवं चिरतरं कर्तुं मनीषा तव ।
कालोऽयं न दयाकुलो हि पुरुषं क्लिश्यन्तमत्युल्बणम्
स्मारं स्मारमनुस्मरन्तमथ तं दृष्ट्वा हसत्यद्भुतम् ॥ १ ॥

सोऽयं सम्प्रति रञ्जितो नु भवता सौन्दर्यसारेण वै
रम्योऽसौ विहितश्च मृत्युरपि चानङ्गो नु साङ्गः कृतः ।
शान्तायां निशि प्रेमकर्णजपितं हृद्यं रहस्यं हि तत्
तूष्णींभूतशिलामयत्वमयितं कल्पान्तपर्यन्तकम् ॥ २ ॥

साम्राज्यानि गतानि धूसरपथं संवत्सराणां शतम्
संलीनं तिमिरे तथापि शनकैस्तारागणान् भाषते ।
स्मर्ताहं पुनरेष विस्मरति वै जीवस्त्वनन्तेरितः
सौन्दर्यालयचत्वरेषु सकलं सन्त्यज्य निर्गच्छति ॥ ३ ॥

## टिप्पणी

अस्मिन् पद्यभागे उद्धृतस्य कविताद्वयस्य कर्ता संस्कृतसारस्वतक्षेत्रे प्रथितयशाः कृष्णाचार्य तमणाचार्य पाण्डुरङ्गीमहोदयः। कर्णाटकस्य धारवाडमण्डले (District) तुम्मिनकट्टि ग्रामः तस्य जन्मस्थानम्। अधुना बेंगलूरुनगरं तस्य वासस्थानम। प्राध्यापकः पाण्डुरङ्गी-महोदयः बेंगलूरु–विश्वविद्यालयस्य संस्कृतविभागाध्यक्षः आसीत्। एतत्–पूर्वं सः धारवाड-नगरस्य कर्णाटकमहाविद्यालये प्राध्यापकः आसीत्। इदानीम् अधिकारात् निवृत्तोऽपि 'मिथिक् सोसैटी' नाम्न्याः संस्थायाः आध्यक्ष्यं वहति। वेदान्तविद्वान् न्यायविद्वान् मीमांसाशिरोमणिः इत्यादिपदवीभिः भूषितः सः षड्दर्शनी–परिणतः वाग्मी कविः विमर्शकश्च। तस्य बहवः संशोधनलेखाः ग्रन्थाः कविताश्च प्रकटिताः। तस्य कविताः कर्णाटक-कालेज्-पत्रिका, उद्यानपत्रिका, मधुरवाणी, इत्यादि पत्रिकासु–प्रकटिताः सहृदयैः आदृताश्च। तस्य कवितासु काश्चन आङ्गल–कर्णाटकभाषाभ्याम् अनूदिताः अन्याः काश्चन स्वतन्त्ररचनाः।

अस्य कवेः काव्यकृतिषु मुख्याः — १. सर्वज्ञवचनानि २. ताजमहल ३. शैशवम् (अनूदितकृतयः); ४. देवः ५. विरोधाभासषट्कम् ६. अश्रुविन्दवः ७. भारतपुत्र-रत्नतिलकः ८. विद्याप्रशस्तिः ९. रम्यता (स्वतन्त्ररचनाः) १०. तपःफलम् ११. नभोवाणीरूपकाणि १२. उपनिषद्रूपकाणि।

अत्र 'रम्यता' नाम्न्यां कवितायां रम्यतायाः रहस्यं कविः सम्यक् उद्घाटयति। 'ताजमहल' नाम्नी कविता तु रवीन्द्रनाथ–टागोर–कवेः कवितायाः अनुवादः। इयं कविता शहाजहान्राजेन निर्मितं ताजमहल् नाम स्मारकं दृष्ट्वा कवेः मनसि जागृतं भावम् अभिव्यनक्ति।

पाण्डुरङ्गी–महोदयस्य काव्यशैली अर्थवैशद्येन मधुरपदविन्यासेन च मनोहरा।

### रम्यता

१. नु — वितर्के अव्ययम्। **सहृदयचेतोरम्यतारोपः** — सहृदयानां चेतः, तेन रम्यतायाः आरोपः। **विघटयतु** — वि + घट् धातोः णिजन्त लोट्, प्र. पु. ए.; घट् धातुः आत्मनेपदी, प्रेरणार्थकरूपे (णिजन्ते) परस्मैपदी भवति; रहस्यभेदं करोतु इत्यर्थः।

२. **शक्रचापः** — इन्द्रधनुः। **कुसुमसमयः** — वसन्तसमयः। **भृङ्गवृन्दम्** — भ्रमरसमूहः।

३. **श्रुतिजडमतिः** — अत्र विक्रमोर्वशीये ऊर्वशीवर्णनावसरे विद्यमानस्य श्लोकस्य भावः उदाहृतः। **जुष्टवान्** — पोषितवान्। **कविसहृदयरूपः** — असौ (ब्रह्मा) इत्यस्य विशेषणम्।

४. **भावसौन्दर्यरम्याम्** — भावस्य सौन्दर्यं, तेन रम्याम् (रसदृष्टिम्)। **दुर्विदग्धे** — जडमतौ।

५. **हृदयम् एकम्** — वाल्मीकेः इति यावत्। क्रौञ्चपक्षिणं दृष्ट्वा इत्यर्थः। **हृदयम् अन्यत्** — भवभूतेः इत्यर्थः। अत्र कविः उत्तररामचरिते विद्यमानां 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' इत्युक्तिं मनसि कृत्वा वदति। **पूरं** — प्रवाहम्।

६. **नलिनजनुः** — नलिनं (पद्मं) जनुः (जन्मस्थानं) यस्य सः; ब्रह्मा विष्णोः नाभिकमलादुत्पन्नः। **पुलिनजननमुख्याः** — पुलिने जननं यस्य सः (वाल्मीकिः), सः मुख्यः येषां ते। **शेवधिः** — निधिः; रकारे परे विसर्गः रेफो भवति; पुनः रेफस्य लोपे, पूर्वस्य इकारः दीर्घो भवति; एवं शेवधी रम्यतायाः इति भवति।

**ताजमहल्**

१. **राजन्याग्र** — राजन्यानाम् अग्रः, (संबोधना प्रथमा); राजन्याः — राज्ञाम् अपत्यानि पुमांसः राजन्याः, अपत्यार्थे यत्प्रत्ययः। **मनीषा** — इच्छा। **क्लिश्यन्तम्** — क्लेशम् अनुभवन्तम्। अत्युल्वणम् — तीव्रम्। **स्मारं स्मारं** — पुनः पुनः स्मरन्।

२. **रम्यः विहितः** — सुन्दरः कृतः। **अनङ्गः** — अङ्गरहितः, रूपरहितः। **प्रेम-कर्णजपितम्** — प्रेम्णः कर्णे जपितम्; प्रेम्णः — प्रियतमायाः प्रेम्णः साकाररूपत्वात्; जपितम् — जल्पितम्। **तूष्णींभूतशिलामयत्वम्** — तूष्णींभूता शिला, तन्मयस्य भावः। **अर्पितम्** — प्रापितम्। तद्रहस्यमेव तेन शिलामयत्वेन परिवर्तितम् इति भावः।

३. **धूसरपथम्** — धूसरस्य पन्थाः धूसरपथः, तम्; धूसरः—धूलिः, धूसरप्रायम् इत्यर्थः। **संलीनम्** — मग्नम्, अदृश्यतां नीतम्। भाषते — अत्र 'ताजमहल्रूपिणी शिला' इति कर्तृपदं योजनीयम्। **अनन्तेरितः** — अनन्तेन ईरितः; अनन्तम् – न विद्यते अन्तः यस्य तत्; ईरितः — आहूतः (जीवः)। **सौन्दर्यालयचत्वरेषु** — सौन्दर्यस्य आलयः, तस्य चत्वरेषु; चत्वरम् — अङ्गणम्।

---

# १६. वेमनार्यस्य सूक्तयः

[ यथा कर्णाटकसाहित्ये सर्वज्ञकविः तथा आन्ध्रसाहित्य वेमनार्यः प्रथितयशाः कविः। तस्य सूक्तयः आन्ध्रेषु जनादरणीयाः कतिपयभाषान्तरेषु अनूदिताश्च। संस्कृतभाषायां तु वेङ्कटरामभट्टाभिधेयः आधुनिक-कविः अनूदितवान्। अनूदितेषु पद्येषु कानिचित् अत्र उद्धृतानि। ]

कुटिलदृषदमेकां विग्रहं कारयित्वा
रहसि च दधतस्तं पूजयन्तीह सन्तः।
कुशलमति–विहीनाः प्राणिमात्रेऽस्ति देवः
शिव इति परिपूर्णो नेति जानन्ति, वेम ॥ १ ॥

कीशं कथंचिदुपनीय च धारयित्वा
नव्यांशुकं कपटिनस्तु यथा स्तुवन्ति।
नूनं तथा विगतनीतिषु भाग्यहीनाः
क्षुद्रेषु सन्ति हि तथात्मसुखाय वेम ॥ २ ॥

गाढं मुखे यदि तु रोम भवेच्च किं ते
दाता भवेन्नहि विना भुवि दानधर्मौ।
किं सैरिभो भवति कुत्रचिदत्र दन्ती
किं गर्दभो हयवरो वद योगि–वेम ॥ ३ ॥

गुरुवरपदसेवी कुक्कुरो नो दशेच्च
त्यजति गुरुपदं तु स्वेच्छया देवमेव।
शुनकभुगतिभक्तः स्यादवश्यं हि भक्तिः
हरति दुरितराशिं भक्तिरेकैव वेम ॥ ४ ॥

गुरुरुपदिशतीहापेक्षितां यां तु विद्यां
स खलु सपदि वेत्तुं शक्नुते नापि चित्ते।
अविदितवति तस्मिन्नो गुणः कोऽपि सोऽयं
नहि नहि निजमानं वेत्ति कुत्रापि वेम ॥ ५ ॥

गिरिषु च भुवि वृक्षे प्राङ्न शाखा न पत्र
भवति च फलमेकं प्राङ्गणेऽप्यत्र शून्ये ।
स्वदत इदमिदं स्यात्स्वादुमाधुर्यमेतत्
जनयति मधुरत्वं तत्फले योगि–वेम ॥ ६ ॥

गिरिशवरजटा–निर्मुक्तगङ्गेव लोके
मलिनझरसहस्रं साट्टहासं सनादम् ।
वहति कृपण एवं दातृवत् किं प्रदद्यात्
सुगुण–कुगुणयोः किं नामतोऽस्तीह वेम ॥ ७ ॥

कान्तारभूमिमवरां वृतिकर्षणाभ्यां
बीजप्रदानविधिना समुपास्य काले ।
लब्ध्वा फलं करहराय कराग्वितीर्य
भूत्वा सुखी न वितरेदशनं तु वेम ॥ ८ ॥

## टिप्पणी

अस्मिन् पद्यभागे उद्धृतानां अनूदितपद्यानां रचयिता श्री वेङ्कटरामभट्टः कर्णाटदेशीयः आधुनिककविः। सः कर्णाटक–सर्वकारस्य विद्याक्षेत्रे प्रौढशालाध्यापकः भूत्वा निवृत्तः। अयं कविः संस्कृत, कर्णाटक, हिन्दी इत्यादिभाषासु परिणतः सुप्रभातस्तोत्रसाहित्यक्षेत्रे सः प्रसिद्धः। अनेन कामाक्षीसुप्रभातम् वनशङ्करीसुप्रभातम्, इत्यादि–स्तोत्राणि विरचितानि। अस्य वेङ्कटेश्वर–षोडशोपचार–पूजास्तोत्रम् तिरुपतिक्षेत्रात् प्रकटितम्। गान्धीजीवितमधिकृत्य रचितं मोहनचरितम्, डि. वि. गुण्डप्पमहोदयस्य 'मङ्कुतिम्मनकग्ग' नाम्न्याः कृतेः अनुवादः, तथान्याः अनूदितकृतयः अप्रकटिताः सन्ति। अस्य कवेः भाषा सरला, मधुरा च वर्तते।

१. वृषदं — शिलाम्।
२. कोशं — मर्कटम्।
८. कान्तारभूमिं — वनभूमिम्। करहराय — राज्ञे।

# १७. श्रीस्तवदशकम्

[ स्तोत्र–साहित्यस्य परम्परा आधुनिककविभिः सम्यक् अभिवर्धिता । नवीनानि इष्टदेवतानां मताचार्याणां च स्तोत्राणि तैः विरचितानि । इष्टदेवतास्तोत्रेषु सामान्यतः पुराणोक्तानां महिमाविशेषाणां वर्णनं लक्ष्यते । तथापि केचन कवयः स्वप्रतिभया तेषां महिमाविशेषाणां गूढम् अर्थं नावीन्येन विशदयन्ति । अयं विशेषः आधुनिककवेः शिङ्गरार्यस्य श्रीस्तवदशके सम्यक् दृश्यते । ]

लक्ष्मीं पक्षीशलक्ष्माढ्यवक्षस्थल–कृत–क्षणाम् ।
अतीक्ष्णेक्षणविक्षेपक्षिप्रक्षेमकरीं स्तुमः ॥ १ ॥

पुराणपुंसः परताद्यचिह्नवतोऽवतारानुगुणावताराम् ।
कृपावशत्रातजगत्रयीं तां रमां नमाम्यश्रुतभूमसीमाम् ॥ २ ॥

वारिताश्रितजनापदुच्चयां भूरिभाग्यविभवाधिदेवताम् ।
नीरजाक्षदयितां दयाञ्चितां क्षीरसागरसुतां रमां भजे ॥ ३ ॥

श्रियं देवीं वन्दे करकलितपद्मां शुभकरीं
सरोजान्तर्वासां विविधमणिभूषोज्ज्वलतनूम् ।
निजोत्पत्तिस्थानप्रभवदृढलग्नोर्मिवलय–
भ्रमाधायिक्षौमावृतमृदुलरम्याङ्गलतिकाम् ॥ ४ ॥

मुनिशापविलुप्तसम्पदिन्द्रो यदपाङ्गामृतवीचिसेचनेन ।
समवाप पुनश्च नाकलक्ष्मीं कुशलाप्त्यै समुपाश्रये श्रियं ताम् ॥ ५ ॥

मुखपाणिपादमरुणाम्बुजं दृशावसितोत्पले च वसतिस्तवाम्बुजम् ।
कमलं बिभर्षि कमले ! कराम्बुजे नमतां शिरस्सु सुमवत्प्रकाशसे ॥ ६ ॥

स्वयं कारुण्यार्द्रायतहृदि हरावात्मदयितेऽ
प्यविस्रम्भादम्ब प्रणयरसदम्भादयि रमे ।
समाश्रित्य प्रेयोहृदयमसकृत्पोषितदयं
विधाय प्रायस्त्वं सवृजिनजनानप्यवसि हि ॥ ७ ॥

तीक्ष्णालोकदृशा क्वचिज्जडदृशा पश्यन् जगद्रक्षति
स्वातन्त्र्यादवशो जनार्दन इति ख्यातः पतिस्ते रमे ।
तद्वक्षस्थलमेत्य शीतलकृपासान्द्रं मनः कुर्वती
लोकान्नावसिचेत्तदा कथमसौ संत्राणदक्षो हरिः ॥ ८ ॥

पद्मोद्भवेति प्रथितं स्वनाम विचित्ररीत्या विवृणोषि पद्मे ।
त्वदीक्षणाम्भोजवशात् त्वमेव संभूय दीनान् कुरुषे निधीनान् ॥ ९ ॥

कटाक्षलहरीं सुधारससमानसारां स्वयं
जगज्जननि मय्यपि प्रहिणु तादृशीमिन्दिरे ।
यदीयकणसेचनप्रभवतारतम्याच्चितः
कृता नृजलदोक्षहंसमुखवाहनाः काश्चन ॥ १० ॥

## टिप्पणी

इदं श्रीस्तवदशकं जग्गु शिङ्गरार्यस्य काव्यकलापनाम्नः स्तोत्रसङ्ग्रहात् उद्धृतम् । जग्गु शिङ्गरार्यः कर्णाटके मण्डयामण्डले विद्यमाने मेलुकोटेनाम्नि पुण्यक्षेत्रे संस्कृतविदुषां वंशे जातः । अधुना तुमकूरुनगरं तस्य वासस्थानम् । सः प्रौढशालायां संस्कृताध्यापको भूत्वा निवृत्तः । सः कर्णाटकसर्वकारेण संमानितः । तस्य काव्यव्यवसायः अधुनापि प्रवर्तते । वह्व्यः तस्य कृतयः अमुद्रिताः सन्ति इति ज्ञायते । एतान्यस्य मुद्रितानि काव्यानि—

१. यदुशैलचम्पूः २. दाशरथिचरितम् ३. वेंकटेशपदावलम्बनस्तोत्रम्
४. शिबिवैभवनाटकम् ५. शोरिशौर्यनाटकम् ।

प्रस्तुते स्तवे कविः श्रीदेवीं भक्तिपूर्वकं स्तौति । अत्र लक्ष्म्याः अनितरसाधारणं सौन्दर्यं भक्तकारुण्यं च सम्यक् वर्ण्यते । अस्य कवेः शैली तु अतीव मनोहरा । तत्र तत्र दीर्घसमास-विशिष्टापि इयं शैली अर्थवैशद्येन अक्लिष्टा । पदविन्यासे अनुप्रासस्य माधुर्यं हृदयग्राहि । भक्तिपुष्टम् अर्थगाम्भीर्यमपि चेतोहारि ।

१. **पक्षीशलक्ष्माढ्यवक्षस्थलकृतक्षणाम्** — पक्षीशलक्ष्मणः आढ्यं वक्षस्थलं, तस्मिन् कृतः क्षणः यस्याः सा, ताम्; पक्षीशलक्ष्मा — पक्षीशः (गरुडः) लक्ष्म (चिह्नं) यस्य सः, विष्णुः इत्यर्थः ; आढ्यं — विपुलम्; क्षणः — उत्सवः । लक्ष्मीः विष्णोः उरसि निवसति, तत्र वसतिरेव तस्याः उत्सवः । **अतीक्ष्णेक्षणविक्षेपक्षिप्रक्षेमकरीम्** — अतीक्ष्णम् ईक्षणं, तस्य विक्षेपः, तेन क्षिप्रं क्षेमं करोति इति, ताम् ।

२. **पुराणपुंसः** — पुराणः (पुरातनः) पुमान् (पुरुषः), तस्य, विष्णोः इत्यर्थः । **परताद्यचिह्नवतः** — परता आद्या येषां तानि परताद्यानि, परताद्यानि चिह्नानि अस्य सन्तीति

परताऽद्य–चिह्नवान्, तस्य; परता–परात्परत्वम्। **अश्रुतभूमसीमाम्** — अश्रुता भूम्नः सीमा यस्याः सा अश्रुतभूमसीमा, ताम्; भूमा – सम्पत्, सीमा – इयत्तारुपा अवधिः।

३. **वारिताश्रितजनापदुच्चयाम्** — आश्रितानां जनानां आपदः, तासाम् उच्चयः; वारितः आश्रितजनापदुच्चयः यया सा, ताम्; आपदः – विपत्तयः, उच्चयः – समूहः। **नीरजाक्षदयिताम्** — नीरजाक्षः – विष्णुः।

४. **सरोजान्तर्वासाम्** — सरोजस्य अन्तः वासः यस्याः सा, ताम्; सरोजं लक्ष्म्या वासस्थानम्। **निजोत्पत्तिस्थानप्रभवदृढलग्नोर्मिवलयभ्रमाधायिक्षौमावृतमृदुलरम्याङ्गलतिकाम्** — निजस्य (स्वस्य) उत्पत्तिस्थानं (क्षीरसमुद्रः), तस्मात् प्रभवः (उत्पत्तिः) यस्य सः निजोत्पत्तिस्थान–प्रभवः; दृढं लग्नाः ऊर्मयः (तरङ्गाः), तेषां वलयः; निजोत्पत्तिस्थान-प्रभवदृढलग्नोर्मिवलयभ्रमाधायि, तादृशं क्षौमं (शुभ्रांशुकं), तेन आवृता मृदुला रम्या च अङ्गलतिका (अङ्गं लतिका इव) यस्याः सा, ताम्।

५. **मुनिशापविलुप्तसंपत्** — मुनेः शापेन विलुप्ता सम्पत् यस्य सः, मुनेः – दुर्वास-नाम्नः। **यदपाङ्गामृतवीचिसेचनेन** — यस्याः अपाङ्गं (कटाक्षः) यदपाङ्गम्, तत् एव अमृतं, तस्य वीचिभिः सेचनं, तेन।

६. **मुखपाणिपादम्** — मुखं च पाणी च पादौ च; प्राण्यङ्गवाचकपदैः घटितः द्वन्द्व-समासः नपुंसकैकवचनान्तः भवति। **कमले** — कमला लक्ष्मीः, संबोधनविभक्तौ रूपम्।

७. **अविस्रम्भात्** — न विस्रम्भात्, विस्रम्भः – विश्वासः। **प्रणयरसदम्भात्** — दम्भात् – व्याजात्। **अयि** — संबोधने अभिमुखीकरणार्थम् इदमव्ययं प्रयुज्यते। **सवृ-जिनजनान्** — वृजिनं मृगचर्म; सवृजिनजनाः – मुनयः, तान्।

८. **तीक्ष्णालोकदृशा** — तीक्ष्णालोकः – सूर्यः। **जडदृशा** — जडः चन्द्रः। सूर्या-चन्द्रमसौ हरेः दृशौ (लोचने) भवतः। **जनार्दनः** — जनान् अर्दयति इति। **अवसिचेत्** — अव + सिच् धातोः विधिलिङ्, प्र. पु. ए.। लक्ष्मीप्रेरणया हरिः लोकान् कृपारसेन सिञ्चति इति भक्तानां विश्वासः।

९. **निधीनान्** — सम्पद्युक्तान्। निधेः (संपत्तेः) इनः (स्वामी) निधीनः, तान्।

१०. **प्रहिणु** — प्र + हि धातोः, लोट्, म. पु. ए., प्रेषय। **यदीयकणसेचनप्रभव-तारतम्यात्** — यासां (लहरीणां) इमे यदीयाः, तेषां कणाः, तेषां सेचनं, तस्मात् प्रभवं तार-तम्यं (तरतमस्य भावः), तस्मात्। **चितः** — चेतनाः। **नृजलदोक्षहंसमुखवाहनाः** — ना (नरः) च जलदश्च उक्षा (वृषभः) च हंसश्च, नृजलदोक्षहंसाः मुखानि येषां तानि, नृज-लदोक्षहंसमुखानि वाहनानि येषां ते; नृवाहनः — कुबेरः, जलदवाहनः — इन्द्रः, उक्षवाहनः — शिवः, हंसवाहनः – ब्रह्मा; मुखानि — आदीनि।

---

# व्याकरणादि–विभागः

## १८. व्याकरण–प्रकरणानि

### सन्धिप्रकरणम्

**स्वरसन्धयः**

१. यण्सन्धिः

यदा इक् अक्षराणां ( इ ई उ ऊ ऋ ॠ लृ ) परतः अच्वर्णाः ( अ आ इ ई उ ऊ ऋ लृ ए ऐ ओ औ ) भवन्ति, तदा इक् अक्षराणां क्रमात् यण् (य र ल व) आदेशः भवति !

तत्र इ ई एतयोः य् भवति — यथा—

अति + अल्पम् = अत्यल्पम् ।
सुधी + उपास्यः = सुध्युपास्यः ।
उ ऊ एतयोः व भवति – यथा
मधु + अरिः = मध्वरिः ।
भू + आदयः = भ्वादयः ।
ऋ इत्यस्य र् भवति — यथा —
धातृ + अंशः = धात्रंशः
लृ इत्यस्य ल् भवति — यथा —
लृ + आकारः = लाकारः ।

२. गुणसन्धिः

यदा अवर्णात् परतः इ उ ऋ लृ वर्णाः भवन्ति, तदा गुणवर्णानां (ए औ अर् अल्) क्रमात् आदेशः भवति ।

तत्र अ वर्णात् इ वर्णे परे पूर्वपरयोः ए कारः भवति — यथा

उप + इन्द्रः = उपेन्द्रः ।

राजा + इन्द्रः = राजेन्द्रः ।

अ वर्णात् उ वर्णे परे ओ कारः भवति — यथा

गंगा + उदकम् = गंगोदकम् ।

उप + उत्तिष्ठेत = उपोत्तिष्ठेत् ।

अ वर्णात् ऋ वर्णे परे अर् आदेशः भवति ।

कृष्ण + ऋद्धिः = कृष्णर्धिः ।

ब्रह्म + ऋषिः = ब्रह्मर्षिः ।

अ वर्णात् लृ वर्णे परे अल् आदेशः भवति । यथा—

तव + लृकारः = तवल्कारः ।

३. वृद्धिसन्धिः

अवर्णात् परतः यदा ए ऐ ओ औ काराः भवन्ति, तदा वृद्ध्यक्षरयोः (ए औ) आदेशः भवति ।तत्र अ वर्णात् ए वर्णे अथवा ऐ वर्णे परे ऐ आदेशः भवति यथा —

कृष्ण + एकत्वम् = कृष्णैकत्वम् ।

देव + ऐश्वर्यम् = देवैश्वर्यम् ।

अ वर्णात् ओ वर्णे अथवा औ वर्णे परे औ आदेशः भवति यथा—

गङ्गा + ओघः = गङ्गौघः ।

कृष्ण + औत्सुक्यम् = कृष्णौत्सुक्यम् ।

यदा अ वर्णात् परतः ऊठ् (ऊहः) भवति, तदा औ इति वृद्धिवर्णः आदेशः भवति ।

प्रष्ठ + ऊहः = प्रष्ठौहः ।

अक्ष शब्दात् परतः ऊहिनी पदस्य सद्भावे अ +ऊ वर्णयोः औ (वृद्धिवर्णः) एकादेशः भवति ।

अक्ष + ऊहिनी = अक्षौहिणी

एवम्—

प्र + ऊहः = प्रौहः ।

प्र + ऊढः = प्रौढः ।

प्र + ऊढिः = प्रौढिः !

ऋत शब्देन सह तृतीयासमासे वृद्धिः भवति । सुखेन ऋतः — सुख + ऋतः = सुखार्तः !

(अत्र आर् इति वृद्धिः रपरः)

४. पररूपसन्धिः

अ वर्णान्तात् उपसर्गात् परतः यदि एकारादिः धातुः भवति तदा पूर्वपरयोः पररूपं एकारः भवति । यदि ओकारादिः धातुः भवति तदा ओकारः भवति— यथा—

उप + एजते = उपेजते ।

उप + ओषति = उपोषति ।

अ वर्णात् परतः यदा ओम् इति पदं भवति तदा ओ कारः पूर्वपरयोः भवति । यथा—

शिवाय + ओम्नमः = शिवायोंनमः ।

अवर्णात् परतः यदा आङ् भवति तदा पररूपं भवति — यथा —शिव + एहि (आ + इहि) = शिवेहि । (अत्र पररूपं एकारः)

५. सवर्णदीर्घसन्धिः

यदि अ आ इ ई उ ऊ ऋ एतेषां वर्णानां परतः सवर्णः स्वरः भवति तदा सवर्णः दीर्घस्वरः पूर्वपरयोः भवति ।

अ आ वर्णयोः अ वर्णे अथवा आ वर्णे परे आकारः भवति यथा—

दैत्य + अरिः = दैत्यारिः ।

सदा + आनन्दः = सदानन्दः ।

इ ई एतयोः इ अथवा ई परे ईकारः भवति । यथा—

हरि + इच्छा = हरीच्छा ।

श्री + ईशः = श्रीशः ।

उ ऊ एतयोः उ अथवा ऊ परे ऊकारः भवति । यथा

विष्णु + उदयः = विष्णूदयः ।

स्वयम्भू + उपदेशः = स्वयम्भूपदेशः ।

ऋ कारात् ऋ कारे ऌकारे वा परे ॠकारः भवति । यथा

होतृ + ऋकारः = होतॄकारः ।

होतृ + ऌकारः = होतॄकारः ।

६. पूर्वरूपसन्धिः

पदान्ते विद्यमानात् ए ओ वर्णात् परतः यदा ह्रस्वः अकारः भवति तदा पूर्वरूपं भवति । यथा—

हरे + अव = हरेऽव ।

विष्णो + अव = विष्णोऽव ।

अ वर्णात् परतः यदा अम् (द्वितीयाविभक्तेः एकवचनप्रत्ययः) भवति तदा पूर्वरूपं भवति । यथा—

ज्ञान + अम् = ज्ञानम् ।

हल्सन्धयः

१. श्चुत्वसन्धिः

यदा सकारात् परतः शकारः अथवा चवर्गाक्षरः भवति, तदा सकारस्य शकारो भवति । यदा च तवर्गाक्षरस्य परतः शकारः चवर्गाक्षरो वा भवति तदा तवर्गस्य चवर्गः भवति । उभयत्रापि श्चुत्वसन्धिः । यथा—

रामस् + शेते = रामश्शेते ।

रामस् + चिनोति = रामश्चिनोति ।

सत् + शास्त्रम् = सच्छास्त्रम् ।

सत् + चित् = सच्चित् ।

२. ष्टुत्वसन्धिः

सकारस्य षकार – टवर्गाभ्यां योगे षकारः, तवर्गस्य षकारटवर्गाभ्यां योगे टवर्गः भवति । अयं ष्टुत्वसन्धिः । यथा—

रामस् + षष्ठः = रामष्षष्ठः ।

रामस् + टीकते = रामष्टीकते ।

पेष् + ता = पेष्टा ।

तत् + टीका = तट्टीका ।

३. जश्त्वसन्धिः

पदान्ते विद्यमानानां झल् (झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह) वर्णानां जश् (ज ब ग ड द) एते वर्णाः भवन्ति। यथा—

वाक् + ईशः = वागीशः।
तत् + अयम् = तदयम्।
षट् + आयतनानि = षडायतनानि।
सुप् + अन्तम् = सुबन्तम्।

४. अनुनासिक–सन्धिः

पदान्ते विद्यमान यर् (य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स) परतः अनुनासिकसद्भावे पूर्वस्यापि अनुनासिकत्वं भवति। यथा—

एतत् + मुरारिः = एतन्मुरारिः।
अथवा एतद्मुरारिः

५. परसवर्णसन्धिः

तवर्गस्य परतः यदा लकारः भवति तदा पूर्वस्यापि परसवर्णः भवति। यथा—

तत् + लयः = तल्लयः

६. पूर्वसवर्णसन्धिः

उद् उपसर्गात् परयोः स्था स्तम्भ् एतयोः पूर्वसवर्णः दकारः भवति। यथा—

उद् + स्थानम् = उत्थानम्।
उद् + स्तम्भनम् = उत्तम्भनम्।

७. छकारादेशसन्धिः

झय् वर्णानां (झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प) परतः विद्यमानस्य शकारस्य छकारः भवति। यथा —

तद् + शिवः = तच्छिवः

८. अनुस्वारसन्धिः

मकारान्तस्य पदस्य परतः यदा हल् वर्णाः (व्यञ्जनवर्णाः) भवन्ति तदा अनुस्वारः भवति। यथा—

हरिम् + वन्दे = हरिं वन्दे।

९. णत्वसन्धिः

रकारात् षकारात् वा परतः यदा नकारः भवति तदा नकारस्य णकारः भवति। तत्र नकार-रकारयोः एवं षकार-नकारयोः मध्ये अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र एतेषां अक्षराणां, कवर्गस्य, पवर्गस्य आङ् नुम् एतयोः व्यवधान-सद्भावेऽपि नकारस्य णकारः भवत्येव। यथा—

निर् + नीतम् — निर्णीतम्।
प्र + नमति = प्रणमति (अकारव्यवधानम्)
परि + नाहः = परिणाहः (इकारव्यवधानम्)
प्र + मानम् = प्रमाणम् (पवर्गव्यवधानम्)

१०. षत्वसन्धिः

आदेशे प्रत्यये वा विद्यमानस्य इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल वर्णानां कवर्गस्य वा परतः विद्यमानस्य सकारस्य षकारः भवति। यथा—

गौरी + सु = गौरीषु।
गुरु + सु = गुरुषु।

विसर्गसन्धिः

१. विसर्गात् परतः खर् वर्णाः (ख फ छ ठ थ च ट त क प श ष स) यदा भवन्ति तदा विसर्गस्य सकारः भवति। यथा—

विष्णुः + त्राता = विष्णुस्त्राता

२. विसर्गात् परतः शर् (श ष स) वर्णाः, तत्परतः खर्वर्णाः यदा भवन्ति, तदा विसर्गस्य लोपः भवति। यथा —

रामः + स्थाता = रामस्थाता।

३. नमः पुरः एतयोः परतः यदा कवर्गपवर्गौ भवतः तदा विसर्गस्य सकारः भवति। यथा—

नमः + करोति = नमस्करोति।

पुरः + करोति = पुरस्करोति।

क्वचित् विसर्गस्य विकल्पेन सकारः भवति। यथा—

तिरः + कर्ता = तिरस्कर्ता।

तिरःकर्ता।

द्विः + करोति = द्विष्करोति।

द्विःकरोति।

क्वचित् विसर्गस्य सकारः न भवति। यथा—

अग्निः करोति, वायुः करोति, मातुः कृपा इत्यादि।

## अजन्त-शब्दाः

सामान्यतः सर्वे अकारान्तपुल्लिङ्ग-शब्दा रामशब्दवत् रूपाणि भजन्ते। परन्तु क्वचित् विशेषः वर्तते। यथा — अकारान्तपुल्लिङ्गगार्ग्यशब्दः।

| | | | |
|---|---|---|---|
| प्रथमा विभक्तिः | गार्ग्यः | गार्ग्यौ | गर्गाः |
| संबोधन विभक्तिः | हे गार्ग्य | हे गार्ग्यौ | हे गर्गाः |
| द्वितीया विभक्तिः | गार्ग्यम् | गार्ग्यौ | गर्गान् |
| तृतीया विभक्तिः | गार्ग्येण | गार्ग्याभ्यां | गर्गैः |
| चतुर्थी विभक्तिः | गार्ग्याय | गार्ग्याभ्यां | गर्गेभ्यः |
| पञ्चमी विभक्तिः | गार्ग्यात् | गार्ग्याभ्यां | गर्गेभ्यः |
| षष्ठी विभक्तिः | गार्ग्यस्य | गार्ग्ययोः | गर्गाणाम् |
| सप्तमी विभक्तिः | गार्ग्ये | गार्ग्ययोः | गर्गेषु |

### अकारान्तः नपुंसकलिङ्गः ज्ञानशब्दः

| | | |
|---|---|---|
| प्र. वि. — ज्ञानम् | ज्ञाने | ज्ञानानि |
| द्वि. वि. — ज्ञानम् | ज्ञाने | ज्ञानानि |

शेषं रामशब्दवत्

सू. रामशब्दः परिचित इति नेह प्रदर्शितः।

### इकारान्तः पुल्लिङ्गः हरिशब्दः

| | | |
|---|---|---|
| प्र वि - हरिः | हरी | हरयः |
| सं प्र वि - हे हरे | हे हरी | हे हरयः |
| द्वि वि - हरिं | हरी | हरीन् |
| तृ वि - हरिणा | हरिभ्यां | हरिभिः |
| च वि - हरये | हरिभ्यां | हरिभ्यः |
| पं वि - हरेः | हरिभ्यां | हरिभ्यः |
| ष वि - हरेः | हर्योः | हरीणां |
| स वि - हरौ | हर्योः | हरिषु। |

एवं रवि, कवि प्रभृतयः शब्दाः।

### इकारान्तः पुल्लिङ्गः औडुलोमिशब्दः।

**औडुलोमिः** **औडुलोमी** **उडुलोमाः**

अस्मिन् शब्दे बहुवचनरूपाणि रामशब्दवत् भवन्ति।

### इकारान्तः नपुंसकलिङ्गः वारि शब्दः

| | | |
|---|---|---|
| प्र वि - वारि | वारिणी | वारीणि |
| सं प्र वि - हे वारे - हे वारि | हे वारिणी | हे वारीणि |
| द्वि वि - वारि | वारिणी | वारीणि |
| तृ वि - वारिणा | वारिभ्यां | वारिभिः |
| च वि - वारिणे | वारिभ्यां | वारिभ्यः |
| पं वि - वारिणः | वारिभ्यां | वारिभ्यः |
| ष वि - वारिणः | वारिणोः | वारिणाम् |
| स वि - वारिणि | वारिणोः | वारिषु |

## इकारान्तः पुल्लिङ्गः पतिशब्दः

| | | |
|---|---|---|
| प्र वि - पतिः | पती | पतयः |
| सं प्र वि - हे पते | हे पती | हे पतयः |
| द्वि वि - पतिं | पती | पतीन् |
| तृ वि - पत्या | पतिभ्यां | पतिभिः |
| च वि - पत्ये | पतिभ्यां | पतिभ्यः |
| पं वि - पत्युः | पतिभ्यां | पतिभ्यः |
| ष वि - पत्युः | पत्योः | पतीनाम् |
| स वि - पत्यौ | पत्योः | पतिषु । |

उकारान्तः पुल्लिङ्गः गुरुशब्दः प्रसिद्ध इति इह न प्रदर्श्यते ।

## ऋकारान्तः पुल्लिङ्गः धातृशब्दः

| | | |
|---|---|---|
| प्र वि - धाता | धातारौ | धातारः |
| सं प्र वि - हे धातः | हे धातारौ | हे धातारः |
| द्वि वि - धातारं | धातारौ | धातृन् |
| तृ वि - धात्रा | धातृभ्यां | धातृभिः |
| च वि - धात्रे | धातृभ्यां | धातृभ्यः |
| प वि - धातुः | धातृभ्यां | धातृभ्यः |
| ष वि - धातुः | धात्रोः | धातृणाम् |
| स वि - धातरि | धात्रोः | धातृषु । |

एवं कर्तृ दातृ वक्तृ प्रभृतयः शब्दाः ।

## ऋकारान्तः पुल्लिङ्गः पितृशब्दः

| | | |
|---|---|---|
| प्र वि - पिता | पितरौ | पितरः |
| सं प्र वि - हे पितः | हे पितरौ | हे पितरः |
| द्वि वि - पितरं | पितरौ | पितृन् |

शेषं धातृशब्दवत् ।

एवं भ्रातृ जामातृ नृ प्रभृति–शब्दाः । नृ शब्दस्य षष्ठीबहुवचने 'नृणां' 'नृणां' इति रूपद्वयं विशेषः ।

## ऐकारान्तः पुल्लिङ्गः रै शब्दः

| | | |
|---|---|---|
| प्र वि - राः | रायौ | रायः |
| सं प्र वि - हे राः | हे रायौ | हे रायः |
| द्वि वि - रायम् | रायौ | रायः |
| तृ वि - राया | राभ्याम् | राभिः |
| च वि - राये | राभ्याम् | राभ्यः |
| पं वि - रायः | राभ्याम् | राभ्यः |
| ष वि - रायः | रायो | रायाम् |
| स वि - रायि | रायोः | रासु |

## ओकारान्तः पुल्लिङ्गः गोशब्दः

| | | |
|---|---|---|
| प्र वि - गौः | गावौ | गावः |
| सं प्र वि - हे गौः | हे गावौ | हे गावः |
| द्वि वि - गाम् | गावौ | गाः |
| तृ वि - गवा | गोभ्याम् | गोभिः |
| च वि - गवे | गोभ्याम् | गोभ्यः |
| पं वि - गोः | गोभ्याम् | गोभ्यः |
| ष वि - गोः | गवोः | गवाम् |
| स वि - गवि | गवोः | गोषु |

## हलन्तशब्दाः

## जकारान्तः पुल्लिङ्गः राज्शब्दः

| | | |
|---|---|---|
| प्र वि राट् | राजौ | राजः |
| सं प्र वि-हे राट् | हे राजौ | हे राजः |
| द्वि वि राजं | राजौ | राजः |
| तृ वि राजा | राड्भ्याम् | राड्भिः |
| च वि राजे | राड्भ्याम् | राड्भ्यः |
| पं वि राजः | राड्भ्याम् | राड्भ्यः |
| ष वि राजः | राजोः | राजाम् |
| स वि राजि | राजोः | राट्सु |

एवं सम्राज् परिव्राज् विश्वसृज् प्रभृतयः ।

### सकारान्तः पुल्लिङ्गः वेधस्शब्दः

| | | |
|---|---|---|
| प्र वि वेधाः | वेधसौ | वेधसः |
| सं प्र वि-हे वेधः | हे वेधसौ | हे वेधसः |
| द्वि वि – वेधसं | वेधसौ | वेधसः |
| तृ वि – वेधसा | वेधोभ्याय् | वेधोभिः |
| च वि – वेधसे | वेधोभ्याम् | वेधोभ्यः |
| प वि – वेधसः | वेधोभ्याम् | वेधोभ्यः |
| ष वि – वेधसः | वेधसोः | वेधसाम् |
| स वि – वेधसि | वेधसोः | वेधस्सु |

एवं चन्द्रमस् सुमनस् पुरोधस् प्रभृतयः ।

### सकारान्तः पुल्लिङ्गः पुंस्शब्दः

| | | |
|---|---|---|
| प्र वि – पुमान् | पुमांसौ | पुमांसः |
| सं प्र वि – हे पुमन् | हे पुमांसौ | हे पुमांसः |
| द्वि वि – पुमांसम् | पुमांसौ | पुंसः |
| तृ वि – पुंसा | पुंभ्याम् | पुंभिः |
| च वि – पुंसे | पुंभ्याम् | पुंभ्यः |
| पं वि – पुंसः | पुंभ्याम् | पुंभ्यः |
| ष वि – पुंसः | पुंसोः | पुंसाम् |
| स वि – पुंसि | पुंसोः | पुंसु |

### चकारान्तः स्त्रीलिङ्गः वाच् शब्दः

| | | |
|---|---|---|
| प्र वि – वाक् | वाचौ | वाचः |
| सं प्र वि – हे वाक् | हे वाचौ | हे वाचः |
| द्वि वि – वाचं | वाचौ | वाचः |
| तृ वि – वाचा | वाग्भ्याम् | वाग्भिः |
| च वि – वाचे | वाग्भ्याम् | वाग्भ्यः |
| पं वि – वाचः | वाग्भ्याम् | वाग्भ्यः |
| ष वि – वाचः | वाचोः | वाचाम् |
| स वि – वाचि | वाचोः | वाक्षु |

एवं त्वच् रुच् प्रभृतयः ।

### सकारान्तः स्त्रीलिङ्गः भास् शब्दः

| | | |
|---|---|---|
| प्र वि – भाः | भासौ | भासः |
| सं प्र वि – हे भाः | हे भासौ | हे भासः |
| द्वि वि – भासं | भासौ | भासः |
| तृ वि – भासा | भाभ्याभ् | भाभिः |
| च वि – भासे | भाभ्याम् | भाभ्यः |
| पं वि – भासः | भाभ्याम् | भाभ्यः |
| ष वि – भासः | भासोः | भासाम् |
| स वि – भासि | भासोः | भास्सु । |

### तकारान्तः नपुंसकलिङ्गः जगत्शद्वः

| | | |
|---|---|---|
| प्र वि – जगत् | जगती | जगन्ति |
| सं प्र वि – हे जगत् | हे जगती | हे जगन्ति |
| द्वि वि – जगत् | जगती | जगन्ति |
| तृ वि – जगता | जगद्भ्याम् | जगद्भिः |
| च वि – जगते | जगद्भ्याभ् | जगद्भ्यः |
| पं वि – जगतः | जगद्भ्याम् | जगद्भ्यः |
| ष वि – जगतः | जगतोः | जगताम् |
| स वि – जगति | जगतोः | जगत्सु |

एवं भास्वत् बृहत् प्रभृतयः ।

### सर्वनामशब्दाः

सर्वं, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, त्वत्, त्व, नेम, सम, सिम, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद् एतद्, इदम्, अदस्, एक, द्वि, युष्मत्, अस्मत्, भवतु, किम् एते सर्वनामशब्दा इत्युच्यन्ते ।

सर्वनामशब्दानां संबोधन-प्रथमाविभक्तिः नास्ति ।

१. अधोनिर्दिष्टरीत्या सर्वादिशब्दानां रूपेषु विशेषः वर्तते ।

| | राम | सर्व |
|---|---|---|
| प्र. वि. ब. | रामाः | सर्वे |
| च. वि. ए. | रामाय | सर्वस्मै |
| पं. वि. ए. | रामात् | सर्वस्मात् |
| ष. वि. ए. | रामाणाम् | सर्वेषाम् |
| स. वि. ए. | रामे | सर्वस्मिन् |

एवं सर्वेषु अकारान्त–सर्वनामशब्देषु विशेषः ।

२. 'उभ' शब्दः द्वित्वसंख्याविशिष्टवाचकः नित्यं द्विवचनान्तः ।

३. 'उभय' शब्दस्य द्विवचनं नास्ति ।

उभयः — उभये इत्यादि ।

४. डतर डतमौ प्रत्ययौ कतर कतमादिशब्दपरौ ।

कतरः = द्वयोः कः ?

कतमः = बहुषु कः ?

५. त्व त्व इति द्वौ शब्दौ अकारान्तौ । अन्य इत्यर्थः । एकः तकारान्त इति केचन ।

६. नेमः = अर्धः समः = सर्वः सिमः = सर्वः ।

७. 'स्व' शब्दस्य यदा 'बान्धवः' इत्यर्थः, 'धनं' इति वा अर्थः, तदा सर्वनामशब्दः न भवति तदा—

| | | |
|---|---|---|
| स्वः | स्वौ | स्वाः (पुं) |
| स्वं | स्वे | स्वानि (नपुं) इत्येव भवति । |

८. अन्तरशब्दस्य परिधानीयम् (वस्त्रम्) इत्यर्थः । बाह्यम् इति च अर्थः ।

९. हलन्तसर्वनामशब्देषु—

अ) त्यद् शब्दः

| | | | |
|---|---|---|---|
| पुल्लिङ्गे — | स्यः | त्यौ | त्ये |
| स्त्रीलिङ्गे — | स्या | त्ये | त्याः |
| नपुंसकलिङ्गे — | त्यद् | त्ये | त्यानि |

इत्यादिरीत्या भवति ।

आ) तद्शब्दः पुल्लिङ्गे — सः तौ ते
स्त्रीलिङ्गे — सा ते ताः
नपुंसकलिङ्गे — तद् ते तानि
इत्यादिरीत्या भवति ।

इ) युष्मद् शब्दः — त्वं युवां यूयम् इत्यादि ।

ई) अस्मद् शब्दः — अहं आवां वयम् इत्यादि ।
युष्मदस्मच्छब्दौ त्रिषु लङ्गेषु समानौ ।

उ) भवतु शब्दः — भवान् भवन्तौ भवन्तः ।
इत्यादिरीत्या भवति ।

ऊ) किम् शब्दः पुल्लिङ्गे कः कौ के
स्त्रीलिङ्गे का के काः
नपुंसकलिङ्गे किं के कानि

एवंरीत्या भवति ।

१०. पूर्वशब्दात् अधरशब्दपर्यन्तं निर्दिष्टाः शब्दाः विकल्पेन सर्वनामसंज्ञकाः भवन्ति । यथा—

पूर्वः पूर्वौ { पूर्वे / पूर्वाः } इत्यादि ।

**संख्यावाचकशब्दाः**

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
|---|---|---|---|---|---|---|---|
| एक | द्वि | त्रि | चतुर् | पञ्चन् | षष् | सप्तन् | अष्टन् |

| ९ | १० | २० | ३० | ४० | ५० |
|---|---|---|---|---|---|
| नवन् | दशन् | विंशति | त्रिंशत् | चत्वारिंशत् | पञ्चाशत् |

| ६० | ७० | ८० | ९० | १०० | १००० | १०,००० |
|---|---|---|---|---|---|---|
| षष्टि | सप्तति | अशीति | नवति | शत | सहस्र | अयुत |

१००००० लक्ष इत्यादयः संख्यावाचकशब्दाः । तत्र—

१. एकशब्दः नित्यं एकवचने प्रयुज्यते। एकः, एकम्, एकेन, एकस्मै, एकस्मात्, एकस्य, एकस्मिन्, इति (पुं)। एका, एकाम्, इत्यादि (स्त्री)। एकं, एकं, एकेन, इत्यादि (नपुं)।

२. द्विशब्दः नित्यं द्विवचने।—

द्वौ, द्वौ द्वाभ्याम् इत्यादिः पुल्लिङ्गे।
द्वे, द्वे द्वाभ्याम् इत्यादि स्त्रीलिङ्गे नपुंसकलिङ्गे च।

३. त्रिशब्दः केवलं बहुवचने।

| | | | | |
|---|---|---|---|---|
| पुं — | त्रयः | त्रीन् | त्रिभिः | त्रिभ्यः |
| स्त्री — | तिस्रः | तिस्रः | तिसृभिः | तिसृभ्यः |
| नपुं — | त्रीणि | त्रीणि | त्रिभिः | त्रिभ्यः |

४. चतुर्शब्दोऽपि तथा।

| | | | |
|---|---|---|---|
| पुं — | चत्वारः | चतुरः | चतुर्भिः |
| स्त्री — | चतस्रः | चतस्रः | चतसृभिः |
| नपुं — | चत्वारि | चत्वारि | चतुर्भिः |

५. पञ्चन् शब्दोऽपि तथा—

पुं, स्त्री, नपुं — पञ्च पञ्च पञ्चभिः इत्यादि।

६. एवं षष् शब्दोऽपि।

पुं, स्त्री. नपुं — षट् षट् षड्भिः इत्यादि।

७. सप्तन् शब्दादारभ्य नवदशन् शब्द–पर्यन्तम् पञ्चन् शब्दवत् रूपाणि। अष्टन् शब्दे तु —

अष्टौ अष्टौ अष्टाभिः अष्टाभ्यः इत्यादिरीत्यापि भवति।

८. 'एकोनविंशति' प्रभृतिशब्दाः स्त्रीलिङ्गे वर्तन्ते।

९. शत, सहस्र प्रभृतिशब्दाः नपुंसकलिङ्गे वर्तन्ते।

१०. विंशतिप्रभृतिशब्दाः सदा एकवचने प्रयोज्याः। पञ्चविंशतिः ब्राह्मणाः। शतं रूप्यकाणि।

परन्तु — नराणां विंशतयः।

नारीणां शतानि। इत्यपि प्रयोगाः।

## क्रियापदप्रकरणम्

क्रियापदस्य मूलरूपाणि धातवः इति कथ्यन्ते। धातवः आत्मनेपदिनः परस्मैपदिनः उभयपदिनः इति त्रिधा विभक्ताः। एध् रम् इत्यादयः धातवः आत्मनेपदिनः। भू अद् इत्यादयः परस्मै–पदिनः। कृ धाव् इत्यादयः उभयपदिनः। केचित् धातवः स्वतः आत्मनेपदिनः अपि तत्तदुपसर्गयोगात् परस्मैपदिनः भवन्ति। एवं परस्मैपदिनोऽपि धातवः आत्मनेपदिनो भवन्ति। उभयपदिनः केचित् अन्यतमपदित्वेन नियम्यन्ते तत्तदुपसर्गयोगात्।

१. परि, वि, अव एतेभ्यः उपसर्गेभ्यः परस्य क्रीधातोः आत्मनेपदित्वमेव भवति। यथा—

परिक्रीणीते विक्रीणीते अवक्रीणीते इत्यादि।

२. वि, परा एताभ्यां उपसर्गाभ्यां परस्य जिधातोः आत्मनेपदित्वं भवति। यथा विजयते पराजयते इत्यादि।

३. सम्, अव, प्र, वि उपसर्गेभ्यः परस्य स्था धातोः तथा। यथा—

संतिष्ठते अवतिष्ठते प्रतिष्ठते वितिष्ठते इत्यादि।

४. अनु, परा, एताभ्यां उपसर्गाभ्यां परस्य कृधातोः परस्मैपदित्वमेव भवति। यथा—

अनुकरोति, पराकरोति इत्यादि।

५. अभि, प्रति, अतिभ्यः परस्य क्षिप् धातोः परस्मैपदित्वं नियम्यते। यथा—

अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति।

६. प्र उपसर्गपूर्वकस्य वह् धातोरपि तथा। यथा— प्रवहति।

७. वि, आङ् (आ) परि एतेभ्यः परस्य रम् धातोः परस्मैपदित्वं भवति। यथा—

विरमति, आरमति, परिरमति इत्यादि

८. उत् सम् पूर्वकत्वे चर्धातुः आत्मनेपदी भवति। यथा—

उच्चरते। सञ्चरते।

९. सम् उपसर्गपूर्वकस्य गम् धातोः आत्मनेपदित्वं भवति। यथा—

संगच्छते।

१०. कदाचित् परस्मैपदिनोऽपि धातवः अर्थविशेषे आत्मनेपदिनो भवन्ति।

अ) तिष्ठति — आतिष्ठते (प्रतिजानीते)
उपतिष्ठते (पूजयति)

आ) जानाति — अपजानीते (अपलपति)

इ) हन्ति — आहन्ते (आत्महत्यां करोति)

ई) ह्वयति — आह्वयते (स्पर्धार्थे)
उदा. — कृष्णः चाणूरं आह्वयते।

उ) वदति — सप्रवदन्ते (संभूय उच्चारयन्ति)
उदा.— ब्राह्मणाः वेदं संप्रवदन्ते।

ऊ) भुनक्ति — भुङ्क्ते (भक्षयति)
उदा. — अन्नं भुङ्क्ते।

११. केचन धातवः णिजन्ताः (प्रेरणार्थकाः) चेत् परस्मैपदिनः भवन्ति। यथा—

जायते — जनयति।
अधीते — अध्यापयति।
भुङ्क्ते — भोजयति।
शेते — शाययति।

## दश धातुगणाः

धातुषु दश गणा वर्तन्ते । एकैकगणपठित–धातूनां एकैकः विकरणप्रत्ययः भवति । एवं विकरण–प्रत्यया अपि दश वर्तन्ते । यथा—

| | धातुगणः | विकरणप्रत्ययः | अन्तिमरूपम् । |
|---|---|---|---|
| १ | भ्वादिगणः — | शप् (अ) | भवति । |
| | भू + | अ + | ति = भवति । |
| २ | अदादिगणः | शप्लुक् (विकरणप्रत्ययस्य लोपः) | अत्ति |
| | अद् + | — | ति = अत्ति |
| ३ | जुहोत्यादिगणः | श्लुः (विकरण-प्रत्ययस्य लोपः) | जुहोति |
| | हु + | — | ति = जुहोति |
| ४ | दिवादिगणः — | श्यन् (य) | दीव्यति |
| | दिव् + | य + | ति = दीव्यति । |
| ५ | स्वादिगणः | श्नु (नु) | सुनोति । |
| | षुञ् + | नु + | ति = सुनोति |
| ६ | तुदादिगणः | श (अ) | तुदति |
| | तुद् + | अ + | ति = तुदति |
| ७ | रुधादिगणः | श्नम् (न) | रुणद्धि |
| | रुधिर् + | न + | ति = रुणद्धि । |
| ८ | तनादिगणः | उ | तनोति — तनुते |
| | तन् + | उ + | ति — तनोति<br>ते — तनुते |
| ९ | क्र्यादिगणः | श्ना (ना) — | क्रीणाति |
| | क्रीण् + | ना + | ति = क्रीणाति । |
| १० | चुरादिगणः — | णिच् (अय) — | चोरयति । |
| | चुर् + | अय + | ति = चोरयति । |

## दश लकाराः

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् एते दश लकाराः।

१. तत्र वर्तमानकालीन-क्रियावाचकात् धातोः लट् भवति। यथा—इदानीं रामः गच्छति। अत्र गमनक्रिया वर्तमानकालीना इत्यर्थः।

२. यदा क्रिया भूतकालीना भवति तदा धातोः लङ् लुङ् लिट् एषु अन्यतमः लकारः भवति। तत्रापि क्रिया यदि भूतकालीना, अद्यतना च न, तदा लङ्। अनद्यतनभूते लङ्। यदि क्रिया सामान्यतः भूतकालीना तदा लुङ्। यदि क्रिया अनद्यतना भूतकालीना परोक्षा च तदा लिट्। यथा—

लङ् — मातामहः कथाम् अवदत्।

लुङ् — वृष्टिः अभूत्।

लिट् — कृष्णः कंसं जघान।

३. एवं यदि क्रिया भविष्यत्कालीना भवति तदा लृट् लुट् लृङ् लकारेषु अन्यतमः भवति! तत्र सामान्यतः भविष्यदर्थे लृट्, अनद्यतन-भविष्यदर्थे लुट् भवति। यदा क्रिययोः हेतुहेतुमद्भावः (कार्यकारणभावः) विवक्षितः क्रियाया अनिष्पत्तिश्च वर्तते तदा भविष्यदर्थे लृङ् भवति। यथा—

लृट् — श्वः देवदत्तः आगमिष्यति।

लुट् — अयं बालकः मेधावी भविता।

लृङ् — यदि अहं कविः अभविष्यं तर्हि काव्यानि अरचयिष्यम्।

४. विध्यर्थे लिङ् भवति। सः विधिलिङ् इत्युच्यते। आशीरर्थे लिङ् आशीर्लिङ् इत्यभिधीयते। यदि क्रिययोः द्वयोः केवलं हेतुहेतुमद्भावः वर्तते तदापि लिङ् भवति। यथा—

विधिलिङ् — भरतः महीं पालयेत्।

आशीर्लिङ् — शुभं भूयात्।

हेतुहेतुमद्भावे — कृष्णं नमेत् चेत् सुखं यायात्।

५. लोट्लकारः आशीरर्थे, आज्ञार्थे विध्यर्थे च भवति। यथा—

चिरं जीव। गाम् आनय।

६. लेट् वेदे भवति।

७, 'स्म' इति पदप्रयोगे भूतार्थे लट् भवति। एवं, वर्तमानसमीपे भूते भविष्यति च लट् भवति। यथा—

'स्म' प्रयोगे — यजति स्म युधिष्ठरः।
वर्तमानसमीपे भूते — एष गच्छामि।
भविष्यति च — कदा गच्छसि।

८. सामान्यतः लकारार्थाः एकस्यां कारिकायां सङ्गृहीताः।

लट् वर्तमाने लेट् वेदे
भूते लङ् लुङ् लिटस्तथा।
विध्याशिषोस्तु लिङ् लोटौ
लुट् लृट् लृङ् च भविष्यति॥

## प्रयोगत्रयम्

संस्कृत–भाषायां कर्तरिप्रयोगः कर्मणिप्रयोगः भावेप्रयोगः इति त्रिविधः वाक्यप्रयोगः वर्तते। धातवः सकर्मकाः अकर्मकाः इति द्विविधाः। सकर्मकधातूनां कर्तरि कर्मणि च लकारा भवन्ति। अकर्मकधातूनां तु कर्तरि भावे च लकाराः भवन्ति। अतः सकर्मकधातूनां कर्तरिप्रयोगः कर्मणिप्रयोगश्च वर्तते। अकर्मकधातूनां कर्तरिप्रयोगः भावेप्रयोगश्च वर्तते। एवं आहत्य त्रयः प्रयोगाः दृश्यन्ते।

२. तत्र सकर्मकधातूनां कर्तरिप्रयोगे कर्तृवाचकं पदं प्रथमाविभक्तौ, कर्मवाचकं च पदं द्वितीया-विभक्तौ भवति। क्रियापदं च कर्तृवाचक-पदानुसारि यथा—

रामः रावणं हन्ति।

अत्र 'रामः' इति कर्तृवाचकपदं प्रथमाविभक्तौ वर्तते। 'रावणं' इति कर्मबाचक–पदं द्वितीयाविभक्तौ वर्तते। क्रियापदं च कर्तृवाचकपदानुसारि।

२. कर्मणिप्रयोगे तु कर्तृवाचकपदं तृतीयाविभक्तौ, कर्मवाचकपदं प्रथमा विभक्तौ भवतः। क्रियापदं तु कर्मवाचकपदानुसारि, कर्मार्थक–प्रत्यययुक्तं च भवति। यथा—

रामेण रावणः हन्यते।

अत्र कर्तृवाचकपदं 'रामेण' इति तृतीयाविभक्तौ, कर्मवाचकपदं 'रावण:' इति प्रथमाविभक्तौ भवति । क्रियापदं च कर्मवाचकपदानुसारि ।

३. विशेषणपदानि विशेष्यपदानुसारेण व्यत्यस्तानि भवन्ति । इतर—कारकवाचकपदानि व्यत्यस्तानि न भवन्ति । यथा—

लङ्कायां धीरो रामः रावणं हन्ति । (कर्तरिप्रयोगः)
लङ्कायां धीरेण रामेण रावणो हन्यते । (कर्मणिप्रयोगः)

अत्र द्वयोः वाक्ययोः धीरः इति विशेषणपदं कर्तृपदमनुसरति । लङ्कायामिति अधिकरणकारकवाचकपदं द्वयोरपि वाक्ययोः अव्यत्यस्तं वर्तते ।

४. उदाहरणानि—

१) सीता दुःखमनुबभूव (कर्तरि)
सीतया दुःखमनुबभूवे (कर्मणि)

२) गुरुणा तत्त्वमुपादिश्यत (कर्मणि)
गुरुः तत्त्वम् उपादिशत् (कर्तरि)

३) मया अन्या युक्तिः न ज्ञायते (कर्मणि)
अहम् अन्यां युक्तिं न जानामि (कर्तरि)

५. अकर्मक–धातूनां कर्तरिप्रयोगे कर्तृवाचकपदं प्रथमाविभक्तौ भवति । क्रियापदं च भावार्थकप्रत्ययरहितम् । यथा—

सः स्वपिति ।

अत्र सः इति कर्तृवाचकपदं प्रथमा विभक्तौ, स्वपिति इति क्रियापदं च भावार्थकप्रत्ययरहितं वर्तते ।

६. भावेप्रयोगे तु कर्तृवाचकपदं तृतीया–विभक्तौ भवति । क्रियापदं च भावार्थकप्रत्यययुक्तं भवति । यथा—

तेन सुप्यते ।

अत्र कर्तृवाचकपदं तेन इति तृतीयाविभक्त्यन्तम् । क्रियापदं भावार्थकप्रत्यययुक्तं ।

७. उदाहरणम्— अहं भवामि (कर्तरि)— मया भूयते (भावे)

## णिजन्तप्रयोगाः

प्रेरणार्थे धातोः णिच् प्रत्ययः भवति । प्रेरितश्च कर्ता कर्मसंज्ञकः (द्वितीया विभक्तौ) भवति । अयं च क्रमः अधोनिर्दिष्टानां कतिपयधातूनां विषये एव सम्भवति यथा—

ते च धातवः

अ) गत्यर्थकधातवः — रामः वनं गच्छति ।
रामं वनं गमयति । (णिच्)

आ) ज्ञानार्थकधातवः — स्वे वेदार्थं अविदुः ।
स्वान् वेदार्थं अवेदयत् । (णिच्)

इ) भक्षणार्थकधातवः — देवाः अमृतं आश्नन् ।
देवान् अमृतं आशयत् । (णिच्)

ई) शब्दकर्मकधातवः — विधिः वेदमध्यैत ।
विधिं वेदं अध्यापयत् । (णिच्)

उ) अकर्मकधातवः — पृथ्वी सलिले आस्त ।
पृथ्वीं सलिले आसयत् । (णिच्)

ऊ) जल्पतिप्रभृतयः — पुत्रः धर्मं जल्पति ।
पुत्रं धर्मं जल्पयति । (णिच्)

केषाञ्चित् धातूनां तु यदा णिच् भवति तदा प्रेरितः कर्ता कर्मसंज्ञः न भवति । यथा—

१. भृत्यः भारं वहति ।
भृत्येन भारं वाहयति । (णिच्)

२. वटुः अन्नं अत्ति ।
वटुना अन्नं आदयति (णिच्)

## कृदन्तरूपाणि

१. धातोः भूतार्थे 'क्त' प्रत्ययः भवति । यथा—
जन् + क्त (त) = जातः (पुं)

२. वर्तमानार्थे कर्त्रर्थे क्तवत् भवति । यथा—

गम् + क्तवत् (तवत्) = गतवान् (पुं)

३. धातुः परस्मैपदी चेत् शतृ (अत्) प्रत्ययः, आत्मनेपदी चेत् शानच् (आन) प्रत्ययः वर्तमानार्थे भवतः । यथा—

गच्छति इति — गम् + शतृ (अत्) = गच्छन् (पुं)
वर्धते इति — वर्ध् + शानच् (आन) = वर्धमानः (पुं)

४. भूतकालार्थे क्त्वा प्रत्ययः भवति । तदन्तं च पदं अव्ययं भवति । यथा—

गम् + क्त्वा (त्वा) = गत्वा

उपसर्गयोगे तु क्त्वा प्रत्ययस्य ल्यप् भवति (य भवति) यथा—

आ + गम् + क्त्वा (ल्यप्) = आगत्य ।

भविष्यदर्थे स्य + शतृ अथवा स्य + शानच् भवति । यथा—

गम् + स्य + शतृ = गमिष्यन् । (पुं)
वर्ध् + स्य + शानच् = वर्धिष्यमाणः । (पुं)

## धातुरूपाणि ।

'वद्' व्यक्तायां वाचि । (परस्मैपदी)

### लट्

| | | ए व | द्वि व | ब व |
|---|---|---|---|---|
| प्रथमपुरुषे | — | वदति | वदतः | वदन्ति । |
| मध्यमपुरुषे | — | वदसि | वदथः | वदथ । |
| उत्तमपुरुषे | — | वदामि | वदावः | वदामः । |

### लङ्

| | | | |
|---|---|---|---|
| प्र. पु. | — अवदत् | अवदताम् | अवदन् |
| म. पु. | — अवदः | अवदतम् | अवदत |
| उ. पु. | — अवदम् | अवदाव | अवदाम |

### लृट्

| | ए व | द्वि व | ब व |
|---|---|---|---|
| प्र. पु. — | वदिष्यति | वदिष्यतः | वदिष्यन्ति |
| म. पु. — | वदिष्यसि | वदिष्यथः | वदिष्यथ |
| उ. पु. — | वदिष्यामि | वदिष्यावः | वदिष्यामः |

### लोट्

| | | | |
|---|---|---|---|
| प्र. पु.— | वदतु / वदतात् | वदताम् | वदन्तु |
| म. पु. — | वद / वदतात् | वदतम् | वदत |
| उ. पु. — | वदानि | वदाम | वदाम |

### विधिलिङ्

| | ए व | द्वि व | ब व |
|---|---|---|---|
| प्र. पु. — | वदेत् | वदेताम् | वदेयुः |
| म. पु. — | वदेः | वदेतम् | वदेत |
| उ. पु. — | वदेयम् | वदेव | वदेम |

### 'एध्' वृद्धौ। (आत्मनेपदी)

### लट्

| | | | |
|---|---|---|---|
| प्र. पु. — | एधते | एधेते | एधन्ते |
| म. पु. — | एधसे | एधेथे | एधध्वे |
| उ. पु. — | एधे | एधावहे | एधामहे |

### लङ्

| | | | |
|---|---|---|---|
| प्र. पु. — | ऐधत | ऐधेताम् | ऐधन्त |
| म. पु. — | ऐधथाः | ऐधेथाम् | ऐधध्वम् |
| उ. पु. — | ऐधे | ऐधावहि | ऐधामहि |

### लृट्

| | | | |
|---|---|---|---|
| प्र. पु. — | एधिष्यते | एधिष्येते | एधिष्यन्ते |
| म. पु. — | एधिष्यसे | एधिष्येथे | एधिष्यध्वे |
| उ. पु. — | एधिष्ये | एधिष्यावहे | एधिष्यामहे |

### लोट्

| | | | |
|---|---|---|---|
| प्र. पु. — | एधताम् | एधेताम् | एधन्ताम् । |
| म पु. — | एधस्व | एधेथाम् | एधध्वम् । |
| उ. पु. — | एधै | एधावहै | एधामहै । |

### विधिलिङ्

| | | | |
|---|---|---|---|
| प्र. पु. — | एधेत | एधेयाताम् | एधेरन् |
| म. पु. — | एधेथाः | एधेयाथाम् | एधेध्वम् |
| उ. पु. — | एधेय | एधेवहि | एधेमहि |

### तुमुन्नन्ताः

१. यदा एका क्रिया अपरक्रियाप्रयोज्या भवति, तदा तादृश-क्रियावाचकात् धातोः तुमुन्-प्रत्ययः भवति । यथा—

कृष्णं द्रष्टुं याति ।

अत्र एका क्रिया दर्शनम् । एषा क्रिया यान-क्रियाप्रयोज्या । अतः द्रष्टुम् इति तुमुन् (तुम्) भवति । तथैव— फलानि आहर्तुं गच्छति ।

२. क्वचित् क्रिया गुणप्रयोज्या चेदपि तादृशक्रिया-वाचकात् धातोः तुमुन् भवति । यथा—

भोक्तुं इच्छति ।

अत्र भोजन-क्रिया इच्छारूपगुण-प्रयोज्या । अतः तुमुन् । एवमेव हन्तुं प्रयतते इत्यत्र हननक्रिया प्रयत्नरूपगुणप्रयोज्या । अतः हन्तुं इति तुमुन् ।

३, 'पर्याप्तः' इति पदसमानार्थकपदप्रयोगेऽपि तुमुन् प्रयुज्यते । यथा—
भोक्तुं पर्याप्तः अथवा प्रवीणः ।
योद्धं कुशलः अथवा पटुः ।

४. कालवाचकपदयोगेऽपि तुमुन् भवति ।
अयं समयः गन्तुम् ।
इयं वेला स्नातुम् ।

## समासाः

तत्पुरुषः, द्विगुः, कर्मधारयः, बहुव्रीहिः, द्वन्द्वः, अव्ययीभावः इति षट् समासाः प्रधानाः प्रसिद्धाश्च ।

१. तत्र तत्पुरुषसमासः द्वितीयातत्पुरुषः, तृतीयातत्पुरुषः, चतुर्थीतत्पुरुषः, पञ्चमीतत्पुरुषः, षष्ठीतत्पुरुषः, सप्तमीतत्पुरुषः इति षड्विधः ।

अ) द्वितीयातत्पुरुषो यथा — कृष्णं श्रितः = कृष्णश्रितः

आ) तृतीयातत्पुरुषो यथा — पित्रा समः = पितृसमः
वाचा कलहः = वाक्कलहः

इ) चतुर्थीतत्पुरुषो यथा — यूपाय दारु = यूपदारु
द्विजाय अयं = द्विजार्थः

ई) पञ्चमीतत्पुरुषो यथा — चोरात् भयं = चोरभयम्
चक्रात् मुक्तः = चक्रमुक्तः

उ) षष्ठीतत्पुरुषो यथा — राज्ञः पुरुषः = राजपुरुषः
देवस्य पूजकः = देवपूजकः

ऊ) सप्तमीतत्पुरुषो यथा — चक्रे बन्धः = चक्रबन्धः ।

२. समासे पूर्वपदं संख्यावाचकं चेत् सः समासः द्विगुसमास इत्यभिधीयते। समाहारार्थे द्विगुसमासः एकवचने भवति। यथा—

त्रयाणां लोकानां समाहारः = त्रिलोकी।

पञ्चानां गवां समाहारः = पञ्चगवम्।

३. विशेषणवाचक— विशेष्यवाचकपदयोः समासः कर्मधारयसमासः इत्युच्यते। यथा—

नीलं उत्पलं = नीलोत्पलम्।

अत्र 'नीलं' इति विशेषणवाचकपदम्। 'उत्पलं' इति विशेष्यवाचक-पदम्। एवं—

कृष्णः सर्पः कृष्णसर्पः।

४. प्रथमाविभक्त्यन्तपदानां समासः बहुव्रीहिसमास इत्युच्यते। बहुव्रीहि-समासे, समासघटकपदानाम् अर्थः न प्रधानः। किन्तु, अन्य एव पदार्थः प्रधानः। यथा—

पीतम् अम्बरं यस्य सः = पीताम्बरः।

'पीताम्बर' इत्यत्र पीताम्बरविशिष्टहरिः अन्यपदार्थः। स एव प्रधानः। न तु अम्बरं प्रधानम्। अयं समानाधिकरण–बहुव्रीहिरित्युच्यते।

प्रथमान्तपदस्य, विभक्त्यन्तर–विशिष्टस्य च समासः व्यधिकरणबहुव्रीहि-रित्युच्यते। यथा—

चक्रं पाणौ यस्य सः = चक्रपाणिः।

५. द्वन्द्वसमासः द्विविधः। इतरेतरयोगद्वन्द्वः। समाहारद्वन्द्वः इति। तत्र—

अ) मिलितानां परस्परं अन्वयः 'इतरेतरयोगः'। अस्मिन्नर्थे समासः 'इतरेतरयोगद्वन्द्व' इत्युच्यते। यथा—

हरिश्च हरश्च = हरिहरौ

द्वन्द्वसमासः अनेकपदानामपि भवति । यथा—

हरिश्च हरश्च गुरुश्च = हरिहरगुरवः ।

क्वचित् द्वन्द्वसमासः एकवचने भवति । यथा—

पाणी च पादौ च = पाणिपादम् ।

गौश्च व्याघ्रश्च = गोव्याघ्रम् ।

आ) समूहः 'समाहारः' । अस्मिन्नर्थे समासः 'समाहारद्वन्द्व' इत्युच्यते । अयं समासः नपुंसकलिङ्गे एकवचने भवति । यथा—

संज्ञा च परिभाषा च एतयोः समाहारः = संज्ञापरिभाषम् ।

एते पञ्च समासाः वैकल्पिकाः । समस्तपदवत्, समासघटकपदानां वाक्यरूपेणापि प्रयोगः वर्तते । यथा—

'राज्ञः पुरुषः' । अथवा 'राजपुरुषः' इति ।

६. अव्ययस्य पदान्तरस्य च समासः 'अव्ययीभावसमास' इत्युच्यते । सः अव्ययं भवति । अयं तु नित्यसमासः । अतः समासघटकपदैः वाक्यरूपेण प्रयोगः नास्ति । यथा—

अतिहिमम् (हिमस्य ध्वंसः) अत्र 'अति' इति अव्ययम् ।

---

# १९. भाषान्तरपाठाः

संस्कृतभाषायाम् अनुवदत।

## 1

At Pataliputra, there lived a king called Sudarshana. One day he heard two stanzas sung by some body. They contained a praise of learning. On hearing them the King became sad. The cause for his sadness was this — His sons were **averse to learning.**[1] They were **wanton in behavior.**[2] The king began to think how he could improve them. He called an assembly of learned men. He placed his problem before the learned men. There was one scholar called Vishnusharma in the assembly. He got up and said — '**Your Majesty!**[3] There is no cause for worry. I shall make your sons learned in six months'. The king sent his sons with him. Vishnusharma taught them the **Science of polity**[4] **through**[5] the stories of **the crow, the tortoise,**[6] etc.

## 2

At **Banaras**[7], there was a rich man called Sarvasara. **Once**[8] he was **fast asleep**[9] during the night. A thief entered his house **by boring a hole in the wall.**[10] A donkey was tied

---

1 विद्याविमुखाः  2 स्वच्छन्दवर्तिनः  3 देव! or महाराज!
4 नीतिशास्त्रम्  5 द्वारा  6 काककूर्मादीनाम्
7 वाराणस्याम्  8 एकदा  9 निद्रामग्नः
10 भित्तौ सन्धिं कृत्वा

in the **courtyard**[1] of the house. A dog was resting **at the threshold.**[2] The donkey asked — 'A thief has entered the house. You are also aware of it. Why do you **not bark aloud**[3] and awaken the master'. The dog said — 'Friend! Do not discuss about my duty. Are you not aware of the **indifference**[4] of the master towards us ? You carry **a big load of merchandise**[5] everyday. He beats you mercilessly. I guard his house throughout the night. He is unkind towards me also. He does not give enough food for both of us. Let us keep quiet. Let the thief carry away everything. The master will realise **the importance**[6] of both of us'.

## 3

Lava and Kusha were the twin sons[7] of Sita and Rama. They were born in the hermitage of Valmiki. The sage **brought them up**[8] with great care. He educated them **in all the lores.**[9] He taught the Ramayana also to them. The twins **learnt it by rote**[10] and sung it melodiously. Once they went to Ayodhya and sung the Ramayana in the court of Rama. Captured by thc melody of the song, Rama gave **valuablc gifts**[11] to them. They paid their respects to him and returned to the hermitage. Valmiki received them and said— 'I am **proud of you.**[12] You made my poem acceptable to Sri Rama.' Sita embraced her sons and asked about the **welfare**[13] of Rama.

---

1 प्राङ्गणे  2 देहळीसमीपे  3 उच्चैः न बुक्कसि
4 अनादरम्  5 भाण्डस्य महद्भारम्  6 महत्त्वम्
7 यमलपुत्रौ  8 पोषयामास  9 सर्वासु विद्यासु
10 कण्ठस्थं चक्रतुः  11 अमूल्यान् उपहारान्  12 युवयोः अतीव सन्तुष्टः
13 कुशलम्

## 4

At Brahmasthala, there lived a Brahmin called Vishnuswami. He had four sons. They became learned in all the **sciences.**[1] When they came of age, Vishnuswami died and his wife also passed away. They were rendered helpless and their relatives took away their property. Having no means of livelihood, they decided to go to their **maternal grand-parents' place**[2] called Yajnasthala. They reached Yajnasthala after a long and tedious journey. Since their grand-parents were not alive, they were given shelter by the maternal uncles.[3] In course of time, they were **looked at with contempt**[4] by his maternal uncles. This is the plight of all those who depend upon others for their livelihood.

## 5

In the Dravida country, there is a city called Kanchi. In that city, there was a merchant's son called Shaktikumara. He attained the age of eighteen years. There arose a thought in his mind — 'There is no happiness without a wife worthy of oneself. How can I find a worthy wife ?' Not finding the qualities of his liking in the damsels chosen by others, he set out in the disguise of an astrologer to find a maiden of his liking. He wandered in the country with a measure of paddy[5] tied in a cloth. Thinking him to be an astrologer, many people asked him to read the future of their daughters. Whenever he came across a fair maiden, he would ask her— 'Good lady ! Would you kindly prepare a good meal[6] for me with this measure of paddy ?' Every girl declined it with a smile. Finally he reached a town on the bank of the river

---

1 शास्त्राणि 2 मातामहग्रामम् 3 मातुलैः
4 अवज्ञया दृष्टाः 5 शालिप्रस्थम् 6 गुणवदन्नम्

Kaveri. There he saw a poor maiden of uncommon beauty. She was under the care of a foster mother.[1] She accepted his offer and prepared a good meal for him. He chose her as his wife.

## 6

There was a Kingdom called Pratishthana on the bank of the river Godavari. That was ruled by a king called Trivikramasena, son of the Vikramasena. He was as powerful as Indra and earned great name[2] for his valour. Everyday, an ascetic, Kshantisheela by name, came to his court and offered him a fruit. The king received the fruit and handed it over to the treasury officer.[3] Thus ten years passed by. As usual the ascetic came and offered the fruit. After his departure, a monkey, slipping from the hands of the guard, entered the court. The king gave the fruit to the monkey. When the monkey bit it, a precious[4] gem emerged from the fruit. The king took that jewel and asked the treasury officer— 'Where have you kept those fruits which I gave you ?' The treasury officer replied — 'Your Majesty![5] I threw those into the treasury chamber[6] through the window.' The king asked him to open the treasury chamber and find them. The treasury officer did accordingly. He came and reported — 'Your Majesty! Fruits have dried up. I find a heap of bright jewels there.'

## 7

Once a hunter called Bhairava went to Vindhya forest in search of deer. There he saw a hog,[7] terrible in form,

1 धात्री 2 कीर्तिः 3 कोषाधिकारी 4 अनर्घं
5 देव ! 6 गञ्जः 7 शूकरः

carrying a deer killed by it. The hunter discharged an arrow at the hog and hit it. The hog, with a frightening roar, dashed at the hunter and hit him at the scrotum.[1] The hunter fell on the ground like a tree cut at its root. A serpent also, crushed under the feet of the hog and the hunter, died. After some time a jackal called Deergharava, wandering in search of food, came there and saw the deer, the hunter, the serpent and the hog, all dead. The jackal exclaimed with joy— 'Ah![2] what a lucky turn! Abundant food is before me! That is why they say—sorrow and happiness come without the least anticipation[3] on the part of the beings. Here fate prevails. Let me enjoy this food which will suffice for three months. This man is enough for one month, the deer and the hog are for two months. Today I shall eat only the flesh sticking to the arrow' When he touched the arrow pierced into the body of the hog, it shot up released from the loosened sinews[4] and hit him. Immediately the jackal also died. Here, too, destiny prevails.

## 8

There was a Brahmins' settlement[5] called Brahmasthala on the bank of the river Yamuna. There lived in it a Brahmin called Agniswami, adept in Veda. He had a daughter called Mandaravati, on creating whom the creator abhorred[6] his skill in creating divine damsels. When she came cf age, three Brahmin youths, equal in every merit, came there from Kanyakubja. Each one of them sought the hand of Mandaravati for himself. Agniswami decided to give his daughter in marriage to one of them. But fearing the other two would commit suicide, he asked all

---

1 मुष्कदेशः 2 अहो 3 अचिन्तितमपि
4 शिथिलस्नायुवन्धनात् 5 अग्रहारः 6 अजुगुप्सत

the three to await the judgement of his daughter. The Brahmin youths agreed to it and stayed in the house of Agniswami undertaking the vow of the partridge.[1] Then suddenly, one day, Mandaravati caught fever and died. The Brahmin youths were terribly hit by sorrow. The cremation was completed. One youth made the ash his bed and stayed in the cremation ground itself. The second youth collected Mandaravati's bones and went to Ganges to merge them in the sacred stream. The third youth became an ascetic and wandered in the country.

## 9

In a mountain called Mandara, there lived a lion called Durdanta. He was indiscriminately killing the animals in the forest for his food. Then all the animals assembled and took a delegation to the lion. They requested him thus— 'Lord of the beasts ! Why do you for once kill many animals. Pray, do us a favour. If you agree, we would every day send on our own an animal for your food. The lion replied— 'If this is your prayer, I agree to this arrangement.' Then onwards the animals sent an animal each day to the lion for his food. One day it was the turn of an old rabbit. He thought— 'Docility on account of fear is for those who have a desire to live. Any how I have to die. Why should I hurry for fear of the lion ?' He walked on slowly and reached the lion very late. The lion, enraged by the intensity of hunger, asked— 'Why have you come late' ? The rabbit said— 'I was detained by another lion at a well'. The lion asked him— 'Where is he ?'. The rabbit took him to the well and asked him to see into it. The lion saw its own

---

1 चकोरव्रतम्

reflection in the water. He jumped into the well thinking that there was another lion there and died.

## 10

On the bank of the river Ganges, there was a city called Kanakapura. There a king called Yashodhana, true to his name, ruled the Kingdom. He, a hero, like a mountain at the shore against the ocean of calamities, protected his subjects with great vigilance. His subjects considercd him as the sun and the moon in one, as he was burning with valour like the sun against the enemies and pleasant with kindness like the moon for his subjects. In his capital, there lived a merchant of great opulence. He had a daughter called Unmadini, who was like beauty incarnate. Whoever saw her used to become intoxicated as it were by drinking in her beauty through his fond eyes. The merchant went to the king and said— 'Your majesty ! I have a daughter, the veritable jewel of the three worlds to be given in marriage. Your majesty is the veritable sun in valour and the moon of virtues. Hence, it behoves you to extend your grace towards me and accept my daughter as your wife.' On hearing this, the king sent his ministers to see the bride. Themselves being enamoured of her beauty, the ministers thought— 'If our king marries the bride of her beauty, he would forget the subjects.' They came and reported to the king that she does not have the auspicious marks to be the queen.

# २०. छन्दोविचारः

संस्कृतकाव्यं गद्यं पद्यं मिश्रं चेति त्रिधा। अपादः पदसन्तानः गद्यम्, चतुर्षु पादेषु विन्यस्तः पदसन्तानः पद्यम्, गद्यपद्योभयात्मकं मिश्रम्। तत्र पद्यरचनायाः वैविध्यं ज्ञातुं छन्दोविचारः ज्ञातव्यः। छन्दःशास्त्रे पद्यं वृत्तं जातिश्चेति द्विधा परिकल्पितम्। वर्णानां संख्यां स्थानं चावलम्ब्य रचितं पद्यं वृत्तम्। मात्राणां संख्यावलम्बि पद्यं जातिः। अस्मिन् पाठ्ये उद्धृतेषु पद्यभागेषु विद्यमानाः श्लोकाः वृत्तात्मकाः। अतः अत्र केवलं वृत्तानां विचारः कृतः।

वृत्ते विद्यमानः वर्णः द्विविधः — लघुः गुरुश्चेति। तत्र ह्रस्ववर्णः लघुः। दीर्घवर्णः गुरुः। संयुक्ताक्षरे अनुस्वारे विसर्गे वा परे ह्रस्ववर्णोऽपि गुरुः भवति। अत्र प्रयुज्यमानौ लघुगुर्वोः सङ्केतौ — लघुः = U, गुरुः = — इति।

अपि च वृत्तपादस्य प्रस्तारं रचयितुं गणानां विभागः कृतः। वर्णत्रयात्मकः गणः। छन्दःशास्त्रे यगणः, रगणः, तगणः, भगणः, जगणः, सगणः, मगणः, नगणः, इति अष्टौ गणाः। गणानां परस्परं भेदः लघु–गुरुवर्णव्यवस्थाम् अवलम्बते। तथा हि—

| | |
|---|---|
| यगणः = U — — | जगणः = U — U |
| रगणः = — U — | सगणः = U U — |
| तगणः = — — U | मगणः = — — — |
| भगणः = — U U | नगणः = U U U |

स्मरणसौकर्यार्थं श्लोकोऽयं वर्तते—

आदिमध्यावसानेषु यरता यान्ति लाघवम्।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम्॥

### केषाञ्चन वृत्तानां लक्षणोदाहरणानि—

१. अनुष्टुप् — अस्य एकैकस्मिन् पादे अष्टौ वर्णाः। तत्र पञ्चमवर्णः सर्वत्र लघुः, षष्ठवर्णः सर्वत्र गुरुः। सप्तमवर्णस्तु द्वितीय – चतुर्थपादयोः ह्रस्वः प्रथमतृतीयपादयोः गुरुः भवति : यथा—

U -- U - U
वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
U - - U - U
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

[ रामायण–महाभारताभ्याम् उद्धृतयोः पद्यभागयोः अनुष्टुप्छन्दः । ]

२. **उपजातिः** — इदं वृत्तं इन्द्रवज्रोपेन्द्रवज्रयोः मिश्ररूपम् । एकैकपादे एकादशवर्णाः भवन्ति ।

तत्र — **इन्द्रवज्रा** — 'स्यादिन्द्रवज्रा यदि तौ जगौ गः', (तगण, तगण, जगण, गुरु, गुरु) = — — U, — — U, U — U, — — ।

**उपेन्द्रवज्रा** — 'उपेन्द्रवज्रा प्रथमे लघौ सा' (जगण, तगण, जगण, गुरु, गुरु) = U — U, — — U, U — U, — — ।

U -U |- -U|U - U|— —
उपजातिः यथा — स देव दारुद्रु मवेदिकायां

— - U|- - U |U - U|- -
शार्दूलचर्मव्यवधानवत्याम् ।

अत्र प्रथमपादे उपेन्द्रवज्रा द्वितीयपादे इन्द्रवज्रा च भवतः । तयोः मिश्रणात् अत्र उपजातिवृत्तं भवति ।

[ 'रत्नं समागच्छति काञ्चनेन' 'भस्मावशेषं मदनं चकार' इत्येतयोः पद्यभागयोः उपजातिवृत्तं प्रयुक्तम् । ]

३. **वसन्ततिलका** — अस्य वृत्तस्य एकैकपादे चतुर्दशवर्णाः भवन्ति । अस्य लक्षणम् — 'उक्ता वसन्ततिलका तभजाः जगौ गः' (तगण, भगण, जगण, जगण, गुरु, गुरु) = — — U, — U U, U — U, U — U, — — ।

— — U|— U U|U— U|U —U - -
यथा— यात्येकतोऽस्तशिखरं पतिरोषधीनाम् ।

[ 'सुभाषितानि' इत्येतस्मिन् पाठे ९, १४ श्लोकौ वसन्ततिलका-वृत्ते स्तः ।

४. **मालिनी** — अस्य वृत्तस्य पादाः पञ्चदशवर्णात्मकाः । लक्षणं तु— "ननमयययुतेयं मालिनी भोगिलोकैः' (नगग, नगण, मगण, यगण, यगण) = U U U, U U U, — — —, U — —, U — — ।

U U U|UUU|— — —|U — —|U— —
यथा— श शि न मु प ग ते यं कौ मु दी मे घ मु क्त म्

[ 'रत्नं समागच्छति काञ्चनेन' इत्यस्य पाठस्य अन्तिमः श्लोकः मालिनीवृत्ते भवति । ]

५. **शिखरिणी** — अस्य वृत्तस्य एकैकपादे सप्तदशवर्णाः भवन्ति । इदं तस्य लक्षणम्— 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' (यगण, मगण, नगण, सगण, भगण, लघु, गुरु) = U — —, — — —, U U U, U U —, — U U, U, — ।

U – —1— – —1 U U U1U U —1— U U1U —
यथा— दि ग न्तै श्रू य न्ते प द म लि न ग ण्डाः क र टि नः ।

[ सुभाषितपाठे ७, १०, १२ एते श्लोकाः गङ्गास्तवस्य श्लोकाश्च शिखरिणीवृत्ते भवन्ति । ]

६. **शार्दूलविक्रीडितम्** — इदं वृत्तम् एकोनविंशतिवर्णयुक्तैः पादैः घटितम् । अस्य लक्षणम्— 'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' (मगण, सगण, जगण, सगण, तगण, तगण, गुरु) = — — —, U U —, U — U, U U —, — — U, — — U, — ।

— — —1U U —1U— U1U U—1 — — U1— —U1—
यथा— वे दा न्ते षु य मा हु रे क पु रु षं व्या प्य स्थि तं रो द सी ।

[ 'सुभाषितानि' इति पाठे ६, १३ एतौ श्लोकौ शार्दूलविक्रीडित-वृत्ताश्रितौ । ]

७. **स्रग्धरा** — एकविंशतिवर्णात्मकैः पादैः विशिष्टमिदं वृत्तम् । लक्षणं तु— 'म्रभ्नैर्यानां त्रयेण त्रिमुनियुता स्रग्धरा कीर्तितेयम्' (मगण, रगण, भगण, नगण, यगण, यगण, यगण) = — — —, — U —, — U U, U U U, U — —, U — —, U — — ।

— — —1 - U—1— UU1U U U1U- —1U— - 1U — —1
यथा— या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ।

(यथा च— सुभाषितपाठे ११ श्लोकः)

---

# २१. अलङ्कारमञ्जरी

काव्येषु बहवः अलङ्काराः प्रयुक्ताः । अस्य पाठ्ये संगृहीतेषु गद्य-पद्यभागेषु विद्यामानानाम् अलङ्काराणां मध्ये उपमा, रूपकम् अर्थान्तरन्यासः, इत्यादयः अत्र न उक्ताः । ते अलंकाराः प्रौढशालापठ्यपुस्तकेषु व्याख्याताः । अन्ये केचन अलङ्काराः अत्र निरूपिताः ।

१. दृष्टान्तः — यत्र उपमानोपमेयवाक्ययोः भिन्नौ एव धर्मौ बिम्ब-प्रतिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्तो नाम अलङ्कारः । तस्य लक्षणम्— 'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' इति । यथा—

तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात् कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ।।

अत्र अजं प्राप्य इन्दुमती अन्यं राजानं प्रति गन्तुं न ऐच्छत् इति उपमेय-वाक्यस्य अर्थः । सहकारवृक्षं प्राप्य षट्पदाली वृक्षान्तरं गन्तुं न काङ्क्षति इति उपमानवाक्यार्थः । अनयोः वाक्ययोः बिम्बप्रतिबिम्बभावः वर्तते । अतः अत्र दृष्टान्तालङ्कारः । एवं 'स तिष्ठतु पुरे मम' इति पाठे ६ तमे श्लोके द्रष्टव्यम् ।

२. निदर्शना — यत्र सदृशयोः उपमानोपमेयवाक्यार्थयोः ऐक्यारोपः विद्यते तत्र निदर्शना । तल्लक्षणं तु— 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इति । यथा— सुभाषितपाठे षष्ठश्लोके बालमृणालेन व्याघ्रबन्धनम्, शिरीषकुसुम-प्रान्तेन वज्रमणेः पिधानम्, मधुबिन्दुना क्षाराम्बुधेः मधुरीकरणम्, एते सदृशाः उपमानवाक्यार्थाः । सूक्तिभिः मूर्खाणां प्रतिनयनमपि तादृश एव उपमेयवाक्यार्थः । एवं उपमानोपमेयवाक्यार्थयोः ऐक्यारोपः कविना कृतः । अतः अत्र निदर्श-नालङ्कारः । 'रत्नं समागच्छति काञ्चनेन' इति पाठस्य 'कुलेन कान्त्या' इत्यादिश्लोकोऽपि ।

३. अपह्नुतिः— यत्र उपमेये सदृशधर्मारोपेण स्वधर्मस्य निह्नवः तत्र अपह्नुतिः । अस्य अलंकारस्य लक्षणम् 'शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः'

इति। यथा— 'स तिष्ठतु पुरे मम' इति पाठे ८ तम श्लोके नायं रत्नश्रेणिः किन्तु नक्षत्राणि इति अर्थतः सिद्धत्वात् अपह्नुतिः। मिषात् इति पदस्य सद्भावात् कैतवापह्नुतिरिति ज्ञेयम्। तल्लक्षणं तु 'कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैः निह्नुतेः पदैः' इति।

४. उत्प्रेक्षा— यत्र उपमानधर्मसंबन्धेन उपमेयस्य उपमानतादात्म्य-संभावना वर्तते तत्र उत्प्रेक्षा। तस्याः लक्षणम्— 'संभावना स्यादुत्प्रेक्षा' इति। यथा— 'रत्नं समागच्छति काञ्चनेन' इति पाठस्य अस्मिन् श्लोके—

'तया स्रजा........वरेण्यः' इति।

अत्र अजः स्ववक्षःस्थले लम्बमानां स्रजं इन्दुमत्याः बाहुपाशत्वेन संभावयति। अतोऽत्र उत्प्रेक्षालङ्कारः।

'ताजमहल्'नाम्न्यां कवितायां द्वितीये श्लोकेऽपि उत्प्रेक्षालङ्कारः।

५, दीपकम्— यत्र प्रस्तुताप्रस्तुतानाम् चारु धर्मैक्यं विद्यते तत्र दीपकम्। तस्य लक्षणम्— 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः' इति। यथा— सुभाषितपाठे दशमश्लोके शाणोल्लीढः मणिः, हेतिदलितः समरविजयी, इत्यादयः अप्रस्तुताः। अर्थिषु गलितविभवाः नराः इति प्रस्तुताः। अत्र अप्रस्तुताप्रस्तु-तानां 'तनिम्ना शोभनं' इत्येवरूपं धर्म्यैक्यं निरूपितम्। अतः इदं दीपकम्।

६. आक्षेपः— यत्र अन्यस्य सद्भावे अन्यस्य प्रतिषेधः क्रियते तत्र आक्षेपः। तल्लक्षणं तु— 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति! यथा— सुभा-षितपाठे एव 'क्षान्तिश्चेत् कवचेन किम्' इत्यादिश्लोके आक्षेपाणां माला एव विद्यते। तथैव गङ्गास्तवे तृतीय-श्लोकेऽपि।

७. व्यतिरेकः— यत्र उपमानोपमेययोः विशेषः उक्तः तत्र व्यतिरेकः। विशेषोद्घाटनम् अत्र प्रायः उपमेयाधिक्यपर्यवसायि भवति। तल्लक्षणं तु— 'व्यतिरेको विशेषश्चेदुपमनोपमेययोः' इति। यथा— गङ्गास्तवस्य सप्तमश्लोके। तत्र क्षुद्रपापानि कृतानां पावयितारः तीर्थनिवहाः उपमानत्वेन उदाहृताः। उप-मेयभूता गङ्गातु प्रायश्चित्तप्रसरणपथातीतचरितानां अपि पावयित्री भवति। एव-मुपमानोपमेययोः विशेषः विशदीकृतः। इदं विशेषोद्घाटनं उयमेयाधिक्यपर्यवसायि

भवति। तथैव 'रम्यता'नाम्न्यः कवितायाः तृतीयश्लोके रम्यरूपसृष्टौ लोकस्रष्टुः ब्रह्मणः अपि कविसहृदयरूपो ब्रह्मा विशिष्यते इत्युक्तम्। अतोऽत्रापि व्यतिरेकः।

८. **समुच्चयः**— बहूनां युगपत्संभावितानां गुम्फनं समुच्चयः। तस्य लक्षणम्— 'बहूनां युगपद्भावभाजां गुम्फः समुच्चयः'। यथा— सुभाषितपाठे नवमश्लोके सत्सङ्गत्या क्रियमाणानां यौगपद्येन संभावितानां जाड्यहरणादीनां गुम्फनं विद्यते। अतः तत्र समुच्चयः।

९. **मालारूपकम्**— यत्र एकस्यैव उपमेयस्य बहुभिः उपमानैः सह तादात्म्यारोपः क्रियते तत्र मालारूपकम्। यथा— गङ्गास्तवस्य प्रथमे श्लोके एकस्यैव गङ्गासलिलस्य वसुधासौभाग्यं, शिवस्य महैश्वर्यं, इत्यादिरीत्या बहुभिः उपमानैः तादात्म्यारोपः कृतः। अतः मालारूपकम् अत्र विद्यते।

---

# २२. संस्कृतवाक्यरचना

संस्कृतभाषायां दीर्घप्रबन्धरचनायां परिणतिः अल्पवाक्यैः उपेतानां गद्यानां रचनायां परिश्रमं अपेक्षते। कमपि विषयमादाय अल्पवाक्यैः तद्विशदीकरणे परिणतिं अधिगतवन्तः अनायासेन निर्दुष्टैः, सुन्दरैः सारवद्भिश्च वाक्यैः दीर्घप्रबन्धरचनां कर्तुं प्रभवन्तीति सर्वेषामयम् अनुभवः। अतः केषाञ्चन सुभाषित-वचनानां, लौकिकन्यायानां आभाणकानां च अभिप्रायं संक्षेपेण विशदीकृत्य दिङ्मात्रं प्रदर्श्यते।

१. अपेयेषु तडागेषु बहुतरम् उदकं भवति।

इदं हि आभाणकं कृपणेषु धनिकेषु विद्यमानस्य धनस्य निष्प्रयोजनतां द्योतयति। लोके तडागाः अनेके वर्तन्ते। बहुषु च तेषु समृद्धं जलं दृश्यते। किन्तु क्षारत्वात् वा कलुषित्वात् वा तज्जलं पेयं न भवति। एवमेव धनिकाः बहवः सन्ति। तेषु अनेकेषु प्रभूता सम्पत् विद्यते। किन्तु ते कृपणाः। धनस्य हि मुख्यं प्रयोजनं दानं वा भोगो वा। कृपणानां तु धनं दानाय वा भोगाय वा नैव उपयुज्यते। किन्तु अपेय-ताडगस्य जलवत् व्यर्थं भविष्यति।

२. अहिरेव अहेः पादान् विजानाति।

स्वयं धूर्ता एव अन्येषां धूर्तानां कुटिलोपायान् ज्ञातुं शक्नुवन्ति। स्वभावेन मुग्धः प्रामाणिकश्च नरः सर्वं ऋजु इत्येव वेत्ति— इति अयं लोकस्वभावः अनेन आभाणकेन सूच्यते। सर्पस्य निसर्गसिद्धं हि कौशलं यत् सः किमपि चिह्नम् अकृत्वैव सञ्चरणे समर्थः इति। अत एव अहेः पादान् ज्ञातुं कोऽपि मनुजः नैव शक्नोति। तथापि अहिरपि अन्यस्य अहेः पादचिह्नानि न जानातीति वक्तुं न युक्तम्। एवमेव मुग्धेन वेत्तुमशक्योऽपि धूर्तस्वभावः धूर्तेन वेद्यत एव।

३. पीपिलिकागतिन्यायः।

अस्त्ययं केषांचन स्वभावः यत् ते क्लेशेन साध्ये अधिकं कालं अपेक्षमाणे च कार्ये प्राप्ते विघ्नान् आशङ्कमानाः किमपि कर्तुं नैव उद्युञ्जते। तादृशान् प्रबोध-यितुम् अयं न्यायः प्रवृत्तः। पिपीलिका हि अतिसूक्ष्मशरीरिणः किंचिद्दूरं गन्तुमपि बहुकालं अपेक्षन्ते। किन्तु निरन्तरं कार्यतत्परता तासां स्वभावः। तथा ताः इतरैः बहुकायैः सुलभतया गन्तुमशक्यमपि स्थलं अविरतेन स्वीयप्रयत्नेन गच्छन्ति। अतः

विघ्नशङ्कां दूरीकृत्य क्लेशसाध्यान्यपि कार्याणि साधयितुं जनाः यदा उद्युक्ता भवेयुः तदा ते कार्यं निश्चयेन साधयन्त्येव इति ।

४. अन्धपरम्परान्यायः ।

विवेकिनः जनाः लोके विरलाः । प्रायशः सर्वे मौढ्यम् अवलम्बमानाः कार्या-कार्यविवेचने नैव प्रवर्तन्ते । किन्तु केवलम् इतरान् अनुकुर्वन्ति । तादृशान् अपहसितुम् अस्य न्यायस्य प्रवृत्तिः । अन्धाः स्वयं गमने अशक्ताः अन्यसाहाय्यम् अपेक्षन्ते । यद्यन्योऽपि अन्धः तर्हि तम् अनुसरमाणाः अन्धाः, गर्ते पतन्तं तं नूनम् अनुपतन्ति । तथैव, केवलं अन्यानुकरणशीलाः मूढाः अन्धश्रद्धया अन्यैः क्रियमाणानि कार्याण्यपि अनुतिष्ठन्तः अपहसनीयाः भवन्ति ।

५. प्रारब्धमुत्तमगुणा न परित्यजन्ति ।

प्रायशः अस्ति सर्वेषाम् काचित् आशा यत् ते साधारणैः अशक्यं किञ्चित् अनुष्ठाय लोके महतीं प्रतिष्ठां लभेरन् इति । अनया महत्त्वाकाङ्क्षयैव बहवः बहुधा प्रयत्नशीला भवन्ति । केचन दुर्गमपर्वतारोहणे प्रवर्तन्ते । अपरे अपारं सागरं असहायाः तर्तुं प्रवर्तन्ते । अन्ये ध्रुवप्रदेशेऽपि वस्तुम् उद्युञ्जते । किं ते सर्वे स्वप्रयत्नेषु सफला भवन्ति ? नैव । तत्र कारणन्तु इयं यत् केचिदेव उद्यमशीलाः अन्तरायसहस्रेणापि अविचलितधियः धीराश्चेति । इतरे तु बहवः अल्पमपि क्लेशम् असहमानाः विघ्नलेशादेव भीताः आरम्भे एव अथवा मध्ये स्वकार्यपराङ्मुखा भवन्ति । सुभाषितमिदं ये महानुभावाः कार्यसाधकाः तान् प्रशंसति ।

६. सम्पूर्ण--कुम्भः न करोति शब्दम् ।

बहुभाषितं केषांचन स्वभावः । सर्वस्मिन्नपि विषये स्वपरिचयं प्रदर्शयितुं ते उद्युक्ता भवन्ति । किन्तु प्रायशः तद्वचनानि अर्थहीनानि अनुपयुक्तानि । अन्ये केचन मितं भाषन्ते । कस्मिंश्चिदेव विषये ते स्वाभिप्रायम् आविष्कुर्वन्ति । परन्तु सारवन्ति तद्वचनानि प्राज्ञाः अनुमोदन्ते । अत्र निदानं तु तेषां पाण्डित्यम् । ते सम्पूर्णकुम्भा इव । जलपूर्णः घटः शब्दं नैव करोति । तथैव ज्ञानसम्पन्नाः व्यर्थं बहु न आलपन्ति । अल्पज्ञानिनस्तु अर्धमात्रं जलयुक्ता घटा इव बहु रटन्ति । एवं सम्यक् ज्ञानिनः स्वभावं चित्रयति इदं सुभाषितम् ।

७. **आम्राश्च सिक्ताः पितरश्च तृप्ताः**

एकेन यत्नेन कदाचित् फलद्वयं लभ्यते। यथा आम्रवृक्षमूले पितृतर्पणजलं मुञ्चतः विप्रस्य फलद्वयं — पितृतृप्तिः वृक्षसेचनं चेति। (इदं विद्यार्थिभिः पूरणीयम्।)

## न्यायाः आभाणकाश्च

१ **अन्धदर्पणन्यायः**

अन्धस्य दर्पणेन किं प्रयोजनम्? अविवेकिनः शास्त्रेण नास्ति प्रयोजनम्।

२ **अरण्यरुदितन्यायः**

निर्जने अरण्ये रुदन्तं कः शृणोति। तत्र रोदनं सर्वथा निष्फलम्। एवं अविदुषः सेवाऽपि निष्फलैव।

३ **भिक्षुपादप्रसरणन्यायः**

श्रमपरिहारार्थं किञ्चित्कालं गृहे आश्रयं याचमानः कश्चित् भिक्षुः क्रमशः संपूर्णं गृहम् आक्रामति यथा तथा।

४ **मण्डूकतोलनन्यायः**

चञ्चलस्वभावानां एकत्र मेलनं प्लुतिस्वभावानां मण्डूकानां तोलनमिव अशक्यम्।

५ **इतो व्याघ्रः इतस्तटी**

एकत्र व्याघ्रः अन्यत्र तटी उभयमपि अपायः। एवं कस्मिंश्चित् कार्ये अनुष्ठिते अननुष्ठिते वा अपायः अनिवार्यः।

६ **भक्षितेऽपि लशुने न शान्तो व्याधिः**

लशुनगन्धं केचन न सहन्ते। तथापि व्याधिपरिहारो भवेदित्याशया कष्टेन लशुनं ते भक्षयन्ति। व्याधिस्तु न परिहृतः। एवं अनपेक्षितमपि कार्यं फलाशया केचित् कुर्वन्ति। तदाऽपि फलं अलब्धं दृष्ट्वा इदमाभाणकं प्रयुज्यते।

---